सहस्रं युवतीनां तु प्रसुप्तं स ददर्श ह । देशकालाभियुक्तं तु युक्तवाक्याभिधायि च[१] ॥ ९
तासां मध्ये महाबाहुः शुशुभे राक्षसेश्वरः । गोष्ठे महति मुख्यानां गवां मध्ये यथा वृषः ॥ १०
स राक्षसेन्द्रः शुशुभे ताभिः परिवृतः स्वयम् । करेणुभिर्यथारण्ये परिकीर्णो महाद्विपः ॥ ११
सर्वकामैरुपेतां च पानभूमिं महात्मनः । ददर्श कपिशार्दूलस्तस्य रक्षःपतेर्गृहे ॥ १२
मृगाणां महिषाणां च वराहाणां च भागशः । तत्र न्यस्तानि मांसानि पानभूमौ ददर्श सः ॥ १३
रौक्मेषु च विशालेषु भाजनेष्वर्धभक्षितान् । ददर्श कपिशार्दूलो मयूरान् कुक्कुटांस्तथा ॥ १४
वराहवाध्रीणसकान् दधिसौवर्चलायुतान् । शल्यान् मृगमयूरांश्च हनुमानन्ववैक्षत ॥ १५
क्रकरान् विविधान् सिद्धांश्चकोरानर्धभक्षितान् । महिषानेकशल्यांश्च च्छागांश्च कृतनिष्ठितान् ॥
लेह्यानुच्चावचान् पेयान् भोज्यानि विविधानि च । तथाम्ललवणोत्तंसैर्विविधै रागषाडबैः ॥ १७
हारनूपुरकेयूरैरपविद्धैर्महाधनैः । पानभाजनविक्षिप्तैः फलैश्च विविधैरपि ॥ १८
कृतपुष्पोपहारा भूरधिकं पुष्यति श्रियम् । तत्र तत्र च विन्यस्तैः सुश्लिष्टैः शयनासनैः ॥ १९
पानभूमिर्विना वह्निं प्रदीप्तेवोपलक्ष्यते । बहुप्रकारैर्विविधैर्वरसंस्कारसंस्कृतैः ॥ २०
मांसैः कुशलसंयुक्तैः पानभूमिगतैः पृथक् । दिव्याः प्रसन्ना विविधाः सुराः कृतसुरा[1] अपि ॥ २१
शर्करासवमाध्वीकपुष्पासवफलासवाः । वासचूर्णैश्च विविधैर्दृष्टास्तैस्तैः पृथक् पृथक् ॥ २२
संतता शुशुभे भूमिर्माल्यैश्च बहुसंस्थितैः । हिरण्मयैश्च विविधैर्भाजनैः स्फाटिकैरपि ॥ २३
जाम्बूनदमयैश्चान्यैः करकैरभिसंवृता । राजतेषु च कुम्भेषु जाम्बूनदमयेषु च ॥ २४
पानश्रेष्ठं तथा भूरि कपिस्तत्र ददर्श सः । सोऽपश्यच्छातकुम्भानि शीधोर्मणिमयानि च ॥ २५
राजतानि च पूर्णानि भाजनानि महाकपिः । क्वचिदर्धावशेषाणि क्वचित् पीतानि सर्वशः ॥ २६
क्वचिन्नैव प्रपीतानि पानानि स ददर्श ह । क्वचिद्भक्ष्यांश्च विविधान् क्वचित् पानानि भागशः ॥ २७
क्वचिदन्नावशेषाणि पश्यन् वै विचचार ह । क्वचित् प्रभिन्नैः करकैः क्वचिदालोलितैर्घटैः ॥ २८
क्वचित् संपृक्तमाल्यानि मूलानि च फलानि च । शयनान्यत्र नारीणां शुभ्राणि बहुधा पुनः ॥ २९
परस्परं समाश्लिष्य काश्चित् सुप्ता वराङ्गनाः । काचिच्च वस्त्रमन्यस्याः स्वपन्त्याः परिधाय च ॥ ३०
आहृत्य चाबलाः सुप्ता निद्राबलपराजिताः । तासामुच्छ्वासवातेन वस्त्रं माल्यं च गात्रजम् ॥ ३१
नात्यर्थं स्पन्दते चित्रं प्राप्यमन्दमिवानिलम् । चन्दनस्य च शीतस्य शीधोर्मधुरसस्य च ॥ ३२
विविधस्य च माल्यस्य धूपस्य विविधस्य च । बहुधा मारुतस्तत्र गन्धं विविधमुद्वहन् ॥ ३३
रसानां चन्दनानां च धूपानां चैव मूर्छितः । प्रववौ सुरभिर्गन्धो विमाने पुष्पके तदा ॥ ३४

---

1. कृतसुराः कृत्रिमसुराः । इत्यन्तम् च. नास्ति ।
१. अन्यत्रापीत्यादि युक्तवाक्याभिधायि च

श्यामावदातास्तत्रान्याः काश्चित् कृष्णा वराङ्गनाः । काश्चित् काञ्चनवर्णाङ्ग्यः प्रमदा राक्षसालये॥
तासां निद्रावशत्वाच्च मदनेन च मूर्छितम् । पद्मिनीनां प्रसुप्तानां रूपमासीद्यथैव हि ॥ ३६
एवं सर्वमशेषेण रावणान्तःपुरं कपिः । ददर्श सुमहातेजा न ददर्श च जानकीम् ॥ ३७
निरीक्षमाणश्च तदा ताः स्त्रियः स महाकपिः । जगाम महतीं चिन्तां धर्मसाध्वसशङ्कितः ॥ ३८
परदारावरोधस्य प्रसुप्तस्य निरीक्षणम् । इदं खलु ममात्यर्थं धर्मलोपं करिष्यति ॥ ३९
न हि मे परदाराणां दृष्टिर्विषयवर्तिनी । अयं चात्र मया दृष्टः परदारपरिग्रहः ॥ ४०
तस्य प्रादुरभूच्चिन्ता पुनरन्या मनस्विनः । निश्चितैकान्तचित्तस्य कार्यनिश्चयदर्शिनी ॥ ४१
कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः । न हि मे मनसः किंचिद्वैकृत्यमुपपद्यते ॥ ४२
मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने । शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥ ४३
नान्यत्र च मया शक्या वैदेही परिमार्गितुम् । स्त्रियो हि स्त्रीषु दृश्यन्ते सर्वथा परिमार्गणे ॥ ४४
यस्य सत्त्वस्य या योनिस्तस्यां तत् परिमृग्यते । न शक्या प्रमदा नष्टा मृगीषु परिमार्गितुम् ॥ ४५
तदिदं मार्गितं तावच्छुद्धेन मनसा मया । रावणान्तःपुरं सर्वं दृश्यते न च जानकी ॥ ४६
देवगन्धर्वकन्याश्च नागकन्याश्च वीर्यवान् । अवेक्षमाणो हनुमान्नैवापश्यत जानकीम् ॥ ४७
तामपश्यन् कपिस्तत्र पश्यंश्चान्या वरस्त्रियः । अपक्रम्य तदा वीरः प्रध्यातुमुपचक्रमे ॥ ४८
स भूयस्तु परं श्रीमान् मारुतिर्यत्नमास्थितः । आपानभूमिमुत्सृज्य तां विचेतुं प्रचक्रमे ॥ ४९

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे पानभूमिविचयो नाम एकादशः सर्गः

---

## द्वादशः सर्गः

### हनूमद्विषादः

स तस्य मध्ये भवनस्य मारुतिर्लतागृहांश्चित्रगृहान्निशागृहान् ।
जगाम सीतां प्रति दर्शनोत्सुको न चैव तां पश्यति चारुदर्शनाम् ॥ १

स चिन्तयामास ततो महाकपिः प्रियामपश्यन् रघुनन्दनस्य ताम् ।
ध्रुवं न सीता ध्रियते[1] यथा न मे विचिन्वतो दर्शनमेति मैथिली ॥ २

सा राक्षसानां प्रवरेण जानकी[2] स्वशीलसंरक्षकतत्परा सती ।
अनेन नूनं प्रतिदुष्टकर्मणा हता भवेदार्यपथे वरे स्थिता ॥ ३

---

१. ध्रुवं हि सीता म्रियते च. छ. २. बाला ख. ग. घ. पुना.

विरूपरूपा विकृता विवर्चसो महानना दीर्घविरूपदर्शनाः ।
समीक्ष्य सा राक्षसराजयोषितो भयाद्विनष्टा जनकेश्वरात्मजा ॥ ४

सीतामदृष्ट्वा ह्यनवाप्य पौरुषं विहृत्य कालं सह वानरैश्चिरम् ।
न मेऽस्ति सुग्रीवसमीपगा गतिः सुतीक्ष्णदण्डो बलवांश्च वानरः ॥ ५

दृष्टमन्तःपुरं सर्वं दृष्टा रावणयोषितः । न सीता दृश्यते साध्वी वृथा जातो मम श्रमः ॥ ६
किं नु मां वानराः सर्वे गतं वक्ष्यन्ति संगताः । गत्वा तत्र त्वया वीर किं कृतं तद्वदस्व नः ॥ ७
अदृष्ट्वा किं प्रवक्ष्यामि तामहं जनकात्मजाम् । ध्रुवं प्रायमुपैष्यन्ति कालस्य व्यतिवर्तने ॥ ८
किं वा वक्ष्यति वृद्धश्च जाम्बवानङ्गदश्च सः । गतं पारं समुद्रस्य वानराश्च समागताः ॥ ९
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् । अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥ १०
करोति सफलं जन्तोः कर्म यत्तत् करोति सः । तस्मादनिर्वेदकरं यत्नं चेष्टेऽहमुत्तमम्[2] ॥ ११
भूयस्तावद्विचेष्यामि न यत्र विचयः कृतः । अदृष्टांश्च विचेष्यामि देशान् रावणपालितान् ॥ १२
आपानशाला विचितास्तथा पुष्पगृहाणि च । चित्रशालाश्च विचिता भूयः क्रीडागृहाणि च ॥ १३
निष्कुटान्तररथ्याश्च विमानानि च सर्वशः । इति संचिन्त्य भूयोऽपि विचेतुमुपचक्रमे ॥ १४
भूमीगृहांश्चैत्यगृहान् गृहातिगृहकानपि । उत्पतन्निष्पतंश्चापि तिष्ठन् गच्छन् पुनः पुनः ॥ १५
अपावृण्वंश्च द्वाराणि कपाटान्यवघाटयन् । प्रविशन्निष्पतंश्चापि प्रपतन्नुत्पतन्नपि ॥ १६
सर्वमप्यवकाशं स विचचार महाकपिः । चतुरङ्गुलमात्रोऽपि नावकाशः स विद्यते ॥ १७
रावणान्तःपुरे तस्मिन् यं कपिर्न जगाम सः । प्राकारान्तररथ्याश्च वेदिकाश्चैत्यसंश्रयाः ॥ १८
दीर्घिकाः पुष्करिण्यश्च सर्वं तेनावलोकितम् । राक्षस्यो विविधाकारा विरूपा विकृतास्तदा ॥ १९
दृष्टा हनुमता तत्र न तु सा जनकात्मजा । रूपेणाप्रतिमा लोके वरा विद्याधरस्त्रियः ॥ २०
दृष्टा हनुमता तत्र न तु राघवनन्दिनी । नागकन्या वरारोहाः पूर्णचन्द्रनिभाननाः ॥ २१
दृष्टा हनुमता तत्र न तु सीता सुमध्यमा । प्रमथ्य राक्षसेन्द्रेण नागकन्या बलाद्धृताः ॥ २२
दृष्टा हनुमता तत्र न सा जनकनन्दिनी । सोऽपश्यंस्तां महाबाहुः पश्यंश्चान्या वरस्त्रियः ॥ २३
विषसाद मुहुर्धीमान् हनुमान् मारुतात्मजः । उद्योगं वानरेन्द्राणां प्लवनं सागरस्य च ॥ २४
व्यर्थं वीक्ष्यानिलसुतश्चिन्तां पुनरुपागमत् । अवतीर्य विमानाच्च हनुमान् मारुतात्मजः ॥ २५
चिन्तामुपजगामाथ शोकोपहतचेतनः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमद्विषादो नाम द्वादशः सर्गः

---

१. अपासिध्वे पुना. २. कुर्यादनुत्तमम् क. छ.

## त्रयोदशः सर्गः

### हनूमन्निर्वेदः

विमानात्तु सुसंक्रम्य प्राकारं हरिपुंगवः । हनुमान् वेगवानासीद्यथा विद्युद्घनान्तरे ॥ १
संपरिक्रम्य हनुमान् रावणस्य निवेशनम्[1] । अदृष्ट्वा जानकीं सीतामब्रवीद्वचनं कपिः ॥ २
भूयिष्ठं लोलिता लङ्का रामस्य चरता प्रियम् । न हि पश्यामि वैदेहीं सीतां सर्वाङ्गशोभनाम् ॥ ३
पल्वलानि तटाकानि सरांसि सरितस्तथा । नद्योऽनूपवनान्ताश्च दुर्गाश्च धरणीधराः ॥ ४
लोलिता वसुधा सर्वा न तु पश्यामि जानकीम् । इह संपातिना सीता रावणस्य निवेशने ॥ ५
आख्याता गृध्रराजेन न च पश्यामि तामहम्[2] । किं नु सीताथ वैदेही मैथिली जनकात्मजा ॥ ६
उपतिष्ठेत विवशा रावणेन हृता बलात्[3] । क्षिप्रमुत्पततो मन्ये सीतामादाय रक्षसः ॥ ७
बिभ्यतो रामबाणानामन्तरा पतिता भवेत् । अथवा ह्रियमाणायाः पथि सिद्धनिषेविते ॥ ८
मन्ये पतितमार्याया हृदयं प्रेक्ष्य सागरम् । रावणस्योरुवेगेन भुजाभ्यां पीडितेन च ॥ ९
तया मन्ये विशालाक्ष्या त्यक्तं जीवितमार्यया । उपर्युपरि वा नूनं सागरं क्रमतस्तदा ॥ १०
विवेष्टमाना पतिता समुद्रे जनकात्मजा । आहो क्षुद्रेण चानेन रक्षन्ती शीलमात्मनः ॥ ११
अबन्धुर्भक्षिता सीता रावणेन तपस्विनी । अथवा राक्षसेन्द्रस्य पत्नीभिरसितेक्षणा ॥ १२
अदुष्टा दुष्टभावाभिर्भक्षिता सा भविष्यति । संपूर्णचन्द्रप्रतिमं पद्मपत्रनिभेक्षणम् ॥ १३
रामस्य ध्यायती वक्त्रं पञ्चत्वं कृपणा गता । हा राम लक्ष्मणेत्येवं हायोध्ये चेति मैथिली ॥ १४
विलप्य बहु वैदेही न्यस्तदेहा भविष्यति । अथवा निहिता मन्ये रावणस्य निवेशने ॥ १५
नूनं लालप्यते सीता पञ्जरस्थेव शारिका । जनकस्य सुता सीता[4] रामपत्नी सुमध्यमा[5] ॥ १६
कथमुत्पलपत्राक्षी रावणस्य वशं व्रजेत् । विनष्टा वा प्रनष्टा वा मृता वा जनकात्मजा ॥ १७
रामस्य प्रियभार्यस्य न निवेदयितुं क्षमम् । निवेद्यमाने दोषः स्याद्दोषः स्यादनिवेदने ॥ १८
कथं नु खलु कर्तव्यं विषमं प्रतिभाति मे । अस्मिन्नेवं गते कार्ये प्राप्तकालं क्षमं च किम् ॥ १९
भवेदिति मतं भूयो हनूमान् प्रविचारयन् । यदि सीतामदृष्ट्वाहं वानरेन्द्रपुरीमितः ॥ २०
गमिष्यामि ततः को मे पुरुषार्थो भविष्यति । ममेदं लङ्घनं व्यर्थं सागरस्य भविष्यति ॥ २१
प्रवेशश्चैव लङ्काया राक्षसानां च दर्शनम् । किं मां वक्ष्यति सुग्रीवो हरयो वा समागताः ॥ २२
किष्किन्धां समनुप्राप्तं[6] तौ वा दशरथात्मजौ । गत्वा तु यदि काकुत्स्थं वक्ष्यामि परमप्रियम् ॥ २३
न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम् । परुषं दारुणं क्रूरं तीक्ष्णमिन्द्रियतापनम् ॥ २४

---

१. इदमर्धम् ग. नास्ति ।
२. न च सा दृश्यते नु किम् ति.
३. रावणं दुष्टचारिणम् च. छ.
४. कुले जाता ख. ग.
५. यशस्विनी ग.
६. समनुप्राप्तौ च. छ.

सीतानिमित्तं दुर्वाक्यं श्रुत्वा स न भविष्यति । तं तु कृच्छ्रगतं दृष्ट्वा पञ्चत्वगतमानसम् ॥ २५
भृशानुरक्तो मेधावी न भविष्यति लक्ष्मणः । विनष्टौ भ्रातरौ श्रुत्वा भरतोऽपि मरिष्यति ॥ २६
भरतं च मृतं दृष्ट्वा शत्रुघ्नो न भविष्यति । पुत्रान् मृतान् समीक्ष्याथ न भविष्यन्ति मातरः ॥२७
कौसल्या च सुमित्रा च कैकेयी च न संशयः । कृतज्ञः सत्यसन्धश्च सुग्रीवः प्लवगाधिपः ॥ २८
रामं तथागतं दृष्ट्वा ततस्त्यक्ष्यति जीवितम् । दुर्मना व्यथिता दीना निरानन्दा तपस्विनी ॥ २९
पीडिता भर्तृशोकेन रुमा त्यक्ष्यति जीवितम् । वालिजेन तु दुःखेन पीडिता शोककर्शिता ॥ ३०
पञ्चत्वं च गते राज्ञि तारापि न भविष्यति । मातापित्रोर्विनाशेन सुग्रीवव्यसनेन च ॥ ३१
कुमारोऽप्यङ्गदः कस्माद्धारयिष्यति जीवितम् । भर्तृजेन तु दुःखेन ह्यभिभूता वनौकसः ॥ ३२
शिरांस्यभिहनिष्यन्ति तलैर्मुष्टिभिरेव च । सान्त्वेनानुप्रदानेन मानेन च यशस्विना ॥ ३३
लालिताः कपिराजेन प्राणांस्त्यक्ष्यन्ति वानराः । न वनेषु न शैलेषु न निरोधेषु वा पुनः ॥ ३४
क्रीडामनुभविष्यन्ति समेत्य कपिकुञ्जराः । सपुत्रदाराः सामात्या भर्तृव्यसनपीडिताः ॥ ३५
शैलाग्रेभ्यः पतिष्यन्ति समेत्य विषमेषु च । विषमुद्बन्धनं वापि प्रवेशं ज्वलनस्य वा ॥ ३६
उपवासमथो शस्त्रं प्रचरिष्यन्ति वानराः । घोरमारोदनं मन्ये गते मयि भविष्यति ॥ ३७
इक्ष्वाकुकुलनाशश्च नाशश्चैव वनौकसाम् । सोऽहं नैव गमिष्यामि किष्किन्धां नगरीमितः ॥ ३८
न च शक्ष्याम्यहं द्रष्टुं सुग्रीवं मैथिलीं विना । मय्यगच्छति चेहस्थे धर्मात्मानौ महारथौ ॥ ३९
आशया तौ धरिष्येते वानराश्च मनस्विनः । हस्तादानो मुखादानो नियतो वृक्षमूलिकः ॥ ४०
वानप्रस्थो भविष्यामि ह्यदृष्ट्वा जनकात्मजाम् । सागरानूपजे देशे बहुमूलफलोदके ॥ ४१
चितां[१] कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम् । उपविष्टस्य वा [२]सम्यग्लिङ्गिनं[1] साधयिष्यतः ॥ ४२
शरीरं भक्षयिष्यन्ति वायसाः श्वापदानि च । इदं महर्षिभिर्दृष्टं निर्याणमिति मे मतिः ॥ ४३
सम्यगापः प्रवेक्ष्यामि न चेत् पश्यामि जानकीम् । सुजातमूला सुभगा कीर्तिमाला[३] यशस्विनी[2]॥४४
प्रभग्ना चिररात्राय[४] मम सीतामपश्यतः । तापसो वा भविष्यामि नियतो वृक्षमूलिकः ॥ ४५
नेतः प्रतिगमिष्यामि तामदृष्ट्वासितेक्षणाम् । यदीतः प्रतिगच्छामि सीतामनधिगम्य ताम् ॥ ४६
अङ्गदः सह तैः सर्वैर्वानरैर्न भविष्यति । विनाशे बहवो दोषा जीवन् भद्राणि पश्यति ॥ ४७
तस्मात् प्राणान् धरिष्यामि ध्रुवो जीवति संगमः[५] । एवं बहुविधं दुःखं मनसा धारयन् मुहुः ॥४८

---

1. लिङ्गिनमिति; कार्येण लिङ्गेन गम्यमानं सर्वस्य कारणभूतं परमात्मानं साधयिष्यतः प्राप्स्यत इत्यर्थः । प्राणादिलिङ्गकं जीवं शरीरान्मोचयिष्यत इति तु व्याख्यातारः ।

2. शोभमाना ।

१. चितिम् ति.

२. सम्यग्लिङ्गिनीम् गो. ति. पाठान्तरम् ।

३. कीर्तिवल्ली ग.

४. चिररात्रीयम् च. छ.

५. जीवितसंगमः घ.

नाध्यगच्छत्तदा पारं शोकस्य कपिकुञ्जरः । ततो विक्रममासाद्य धैर्यवान् कपिकुञ्जरः[१] ॥ ४९
रावणं वा वधिष्यामि दशग्रीवं महाबलम् । काममस्तु हृता सीता प्रत्याचीर्णं भविष्यति ॥ ५०
अथवैनं समुत्क्षिप्य उपर्युपरि सागरम् । रामायोपहरिष्यामि पशुं पशुपतेरिव ॥ ५१
इति चिन्तां समापन्नः सीतामनधिगम्य ताम् । ध्यानशोकपरीतात्मा चिन्तयामास वानरः ॥ ५२
यावत् सीतां हि पश्यामि रामपत्नीं यशस्विनीम् । तावदेतां पुरीं लङ्कां विचिनोमि पुनः पुनः ॥ ५३
संपातिवचनाच्चापि रामं यद्यानयाम्यहम् । अपश्यन् राघवो भार्यां निर्दहेत् सर्ववानरान् ॥ ५४
इहैव नियताहारो वत्स्यामि नियतेन्द्रियः । न मत्कृते विनश्येयुः सर्वे ते नरवानराः ॥ ५५
अशोकवनिका चेयं दृश्यते या महाद्रुमा । इमामभिगमिष्यामि न हीयं विचिता मया ॥ ५६
वसून् रुद्रांस्तथादित्यानश्विनौ मरुतोऽपि च । नमस्कृत्वा गमिष्यामि रक्षसां शोकवर्धनः ॥ ५७
जित्वा तु राक्षसान् सर्वानिक्ष्वाकुकुलनन्दिनीम् । संप्रदास्यामि रामाय यथा सिद्धिं तपस्विने ॥ ५८
स मुहूर्तमिव ध्यात्वा चिन्तावग्रथितेन्द्रियः । उदतिष्ठन्महातेजा हनूमान् मारुतात्मजः ॥ ५९

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः ॥ ६०

स तेभ्यस्तु नमस्कृत्वा सुग्रीवाय च मारुतिः । दिशः सर्वाः समालोक्य ह्यशोकवनिकां प्रति ॥ ६१
स गत्वा मनसा पूर्वमशोकवनिकां शुभाम् । उत्तरं चिन्तयामास वानरो मारुतात्मजः ॥ ६२
ध्रुवं तु रक्षोबहुला भविष्यति वनाकुला । अशोकवनिकाचिन्त्या[२] सर्वसंस्कारसंस्कृता ॥ ६३
रक्षिणश्चात्र विहिता नूनं रक्षन्ति पादपान् । भगवानपि सर्वात्मा नातिक्षोभं प्रवाति वै ॥ ६४
संक्षिप्तोऽयं मयात्मा च रामार्थे रावणस्य च । सिद्धिं मे संविधास्यन्ति देवाः सर्षिगणास्त्विह ॥ ६५
ब्रह्मा स्वयंभूर्भगवान् देवाश्चैव दिशन्तु मे । सिद्धिमग्निश्च वायुश्च पुरुहूतश्च वज्रभृत् ॥ ६६
वरुणः पाशहस्तश्च सोमादित्यौ तथैव च । अश्विनौ च महात्मानौ मरुतः [३]सर्व एव च ॥ ६७
सिद्धिं सर्वाणि भूतानि भूतानां चैव यः प्रभुः । दास्यन्ति मम ये चान्ये ह्यदृष्टाः पथि गोचराः ॥ ६८

[1]तदुन्नसं पाण्डरदन्तमव्रणं शुचिस्मितं पद्मपलाशलोचनम् ।
द्रक्ष्ये तदार्यावदनं कदा न्वहं प्रसन्नताराधिपतुल्यदर्शनम् ॥ ६९

---

1. तत् तस्मादित्यर्थः, अतो न पुनरुक्तिः । पुण्या पुना.

१. इदमर्धम् च. छ. नास्ति । ३. शर्वः प्र.

२. चिन्त्या गो.

क्षुद्रेण पापेन नृशंसकर्मणा सुदारुणालंकृतवेषधारिणा।
बलाभिभूता ह्यबला तपस्विनी कथं नु मे दृष्टिपथेऽद्य सा भवेत्॥ ७०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमन्निर्वेदो नाम त्रयोदशः सर्गः

---

## चतुर्दशः सर्गः

### अशोकवनिकाविचयः

स मुहूर्तमिव ध्यात्वा मनसा चाधिगम्य ताम्। अवप्लुतो महातेजाः प्राकारं तस्य वेश्मनः॥ १
स तु संहृष्टसर्वाङ्गः प्राकारस्थो महाकपिः। पुष्पिताग्रान् वसन्तादौ ददर्श विविधान् द्रुमान्॥ २
सालानशोकान् भव्यांश्च चम्पकांश्च सुपुष्पितान्। उद्दालकान्नागवृक्षांश्चूतान् कपिमुखानपि॥ ३
अथाम्रवनसंछन्नां लताशतसमावृताम्। ज्यामुक्त इव नाराचः पुप्लुवे वृक्षवाटिकाम्॥ ४
स प्रविश्य विचित्रां तां विहगैरभिनादिताम्। राजतैः काञ्चनैश्चैव पादपैः सर्वतो वृताम्॥ ५
विहगैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम्। उदितादित्यसंकाशां ददर्श हनुमान् कपिः॥ ६
वृतां नानाविधैर्वृक्षैः पुष्पोपगफलोपगैः। कोकिलैर्भृङ्गराजैश्च मत्तैर्नित्यनिषेविताम्॥ ७
प्रहृष्टमनुजे काले मृगपक्षिसमाकुले। मत्तबर्हिणसंघुष्टां नानाद्विजगणायुताम्॥ ८
मार्गमाणो वरारोहां राजपुत्रीमनिन्दिताम्। सुखप्रसुप्तान् विहगान् बोधयामास वानरः॥ ९
उत्पतद्भिर्द्विजगणैः पक्षैः सालाः समाहताः। अनेकवर्णा विविधा मुमुचुः पुष्पवृष्टयः॥ १०
पुष्पावकीर्णः शुशुभे हनुमान् मारुतात्मजः। अशोकवनिकामध्ये यथा पुष्पमयो गिरिः॥ ११
दिशः सर्वाः प्रधावन्तं वृक्षषण्डगतं कपिम्। दृष्ट्वा सर्वाणि भूतानि वसन्त इति मेनिरे॥ १२
वृक्षेभ्यः पतितैः पुष्पैरवकीर्णा पृथग्विधैः। रराज वसुधा तत्र प्रमदेव विभूषिता॥ १३
तरस्विना ते तरवस्तरसाभिप्रकम्पिताः। कुसुमानि विचित्राणि मुमुचुः कपिना तदा॥ १४
निर्धूतपत्रशिखराः शीर्णपुष्पफला द्रुमाः। निक्षिप्तवस्त्राभरणा धूर्ता इव पराजिताः॥ १५
हनूमता वेगवता कम्पितास्ते नगोत्तमाः। पुष्पपर्णफलान्याशु मुमुचुः पुष्पशालिनः॥ १६
विहङ्गसङ्घैर्हीनास्ते स्कन्धमात्राश्रया द्रुमाः। बभूवुरगमाः सर्वे मारुतेनेव निर्धुताः॥ १७
निर्धूतकेशी युवतिर्यथा मृदितवर्णका। निष्पीतशुभदन्तोष्ठी नखैर्दन्तैश्च विक्षता॥ १८
तथा लाङ्गूलहस्तैश्च चरणाभ्यां च मर्दिता। बभूवाशोकवनिका प्रभग्नवरपादपा॥ १९
महालतानां दामानि व्यधमत्तरसा कपिः। यथा प्रावृषि विन्ध्यस्य मेघजालानि मारुतः॥ २०
स तत्र मणिभूमीश्च राजतीश्च मनोरमाः। तथा काञ्चनभूमीश्च ददर्श विचरन् कपिः॥ २१

वापीश्च विविधाकाराः पूर्णाः परमवारिणा । महार्हैर्मणिसोपानैरुपपन्नास्ततस्ततः ॥ २२
मुक्ताप्रवालसिकताः स्फाटिकान्तरकुट्टिमाः । काञ्चनैस्तरुभिश्चित्रैस्तीरजैरुपशोभिताः ॥ २३
फुल्लपद्मोत्पलवनाश्चक्रवाकोपकूजिताः । नत्यूहरुतसंघुष्टा हंससारसनादिताः ॥ २४
दीर्घाभिर्द्रुमयुक्ताभिः सरिद्भिश्च समन्ततः । अमृतोपमतोयाभिः शिवाभिरुपसंस्कृताः ॥ २५
लताशतैरवतताः संतानकुसुमावृताः । नानागुल्मावृतघनाः करवीरकृतान्तराः ॥ २६
ततोऽम्बुधरसंकाशं प्रवृद्धशिखरं गिरिम् । विचित्रकूटं कूटैश्च सर्वतः परिवारितम् ॥ २७
शिलागृहैरवततं नानावृक्षैः समावृतम् । ददर्श हरिशार्दूलो रम्यं जगति पर्वतम् ॥ २८
ददर्श च नगात्तस्मान्नदीं निपतितां कपिः । अङ्कादिव समुत्पत्य प्रियस्य पतितां प्रियाम् ॥ २९
जले निपतिताग्रैश्च पादपैरुपशोभिताम् । वार्यमाणामिव क्रुद्धां प्रमदां प्रियबन्धुभिः ॥ ३०
पुनरावृत्ततोयां च ददर्श स महाकपिः । प्रसन्नामिव कान्तस्य कान्तां पुनरुपस्थिताम् ॥ ३१
तस्यादूराच्च पद्मिन्यो नानाद्विजगणायुताः । ददर्श हरिशार्दूलो हनुमान् मारुतात्मजः ॥ ३२
कृत्रिमां दीर्घिकां चापि पूर्णां शीतेन वारिणा । मणिप्रवरसोपानां मुक्तासिकतशोभिताम् ॥ ३३
विविधैर्मृगसङ्घैश्च विचित्रां चित्रकाननाम् । प्रासादैः सुमहद्भिश्च निर्मितैर्विश्वकर्मणा ॥ ३४
कृत्रिमैः काननैश्चापि सर्वतः समलंकृताम् । ये केचित् पादपास्तत्र पुष्पोपगफलोपगाः ॥ ३५
विचित्राः संवृता वृक्षाः प्रदीप्ता इव सर्वतः । पुंनागाः सप्तपर्णाश्च चम्पकोद्दालकास्तथा[1] ॥ ३६
सच्छत्राः सवितर्दीकाः सर्वे सौवर्णवेदिकाः । लताप्रतानैर्बहुभिः पर्णैश्च बहुभिर्वृताम् ॥ ३७
काञ्चनीं शिंशपामेकां ददर्श हनुमान् कपिः । वृतां हेममयीभिस्तु वेदिकाभिः समन्ततः ॥ ३८
सोऽपश्यद्भूमिभागांश्च गर्तप्रस्रवणानि च । सुवर्णवृक्षानपरान् ददर्श शिखिसंनिभान् ॥ ३९
तेषां द्रुमाणां प्रभया मेरोरिव दिवाकरः । अमन्यत तदा वीरः काञ्चनोऽस्मीति वानरः ॥ ४०
तां काञ्चनैस्तरुगणैर्मारुतेन च वीजिताम् । किङ्किणीशतनिर्घोषां दृष्ट्वा विस्मयमागमत् ॥ ४१
स पुष्पिताग्रां रुचिरां तरुणाङ्कुरपल्लवाम् । तामारुह्य महाबाहुः शिंशपां पर्णसंवृताम् ॥ ४२
इतो द्रक्ष्यामि वैदेहीं रामदर्शनलालसाम् । इतश्चेतश्च दुःखार्तां संपतन्तीं यदृच्छया ॥ ४३
अशोकवनिका चेयं दृढं रम्या दुरात्मनः । चम्पकैश्चन्दनैश्चापि वकुलैश्च विभूषिता ॥ ४४
इयं च नलिनी रम्या द्विजसङ्घनिषेविता । इमां सा राममहिषी ध्रुवमेष्यति जानकी ॥ ४५
सा रामा राममहिषी राघवस्य प्रिया सती । वनसंचारकुशला ध्रुवमेष्यति जानकी ॥ ४६
अथवा मृगशाबाक्षी वनस्यास्य विचक्षणा । वनमेष्यति सार्येह रामचिन्तानुकर्शिता ॥ ४७
रामशोकाभिसंतप्ता सा देवी वामलोचना । वनवासे रता नित्यमेष्यते वनचारिणी ॥ ४८
वनेचराणां सततं नूनं स्पृहयते पुरा । रामस्य दयिता भार्या जनकस्य सुता सती ॥ ४९

---

१. इदं पद्यम् च. छ. नास्ति ।

सन्ध्याकालमनाः श्यामा ध्रुवमेष्यति जानकी । नदीं चेमां शिवजलां सन्ध्यार्थे वरवर्णिनी ॥ ५०
तस्याश्चाप्यनुरूपेयमशोकवनिका शुभा । शुभा या पार्थिवेन्द्रस्य पत्नी रामस्य संमता ॥ ५१
यदि जीवति सा देवी ताराधिपनिभानना । आगमिष्यति सावश्यमिमां शिवजलां नदीम् ॥ ५२

एवं तु मत्वा हनुमान् महात्मा प्रतीक्षमाणो मनुजेन्द्रपत्नीम् ।
अवेक्षमाणश्च ददर्श सर्वं सुपुष्पिते पत्रघने निलीनः ॥ ५३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे अशोकवनिकाविचयो नाम चतुर्दशः सर्गः

---

## पञ्चदशः सर्गः

### सीतोपलम्भः

स वीक्षमाणस्तत्रस्थो मार्गमाणश्च मैथिलीम् । अवेक्षमाणश्च महीं सर्वां तामन्ववैक्षत ॥ १
संतानकलताभिश्च पादपैरुपशोभिताम् । दिव्यगन्धरसोपेतां सर्वतः समलंकृताम् [1] ॥ २
तां स नन्दनसंकाशां मृगपक्षिभिरावृताम् । हर्म्यप्रासादसंबाधां कोकिलाकुलनिःस्वनाम् ॥ ३
काञ्चनोत्पलपद्माभिर्वापीभिरुपशोभिताम् । बह्वासनकुथोपेतां [2] बहुभूमिगृहायुताम् ॥ ४
सर्वर्तुकुसुमै रम्यां फलवद्भिश्च पादपैः । पुष्पितानामशोकानां श्रिया सूर्योदयप्रभाम् ॥ ५
प्रदीप्तामिव तत्रस्थो मारुतिः समुदैक्षत । निष्पत्रशाखां विहगैः क्रियमाणामिवासकृत् ॥ ६
विनिष्पतद्भिः शतशश्चित्रैः पुष्पावतंसकैः । अमूलपुष्पनिचितैरशोकैः शोकनाशनैः ॥ ७
पुष्पभारातिभारैश्च स्पृशद्भिरिव मेदिनीम् । कर्णिकारैः कुसुमितैः किंशुकैश्च सुपुष्पितैः ॥ ८
स देशः प्रभया तेषां प्रदीप्त इव सर्वतः । पुंनागाः सप्तपर्णाश्च चम्पकोद्दालकास्तथा ॥ ९
विवृद्धमूला बहवः शोभन्ते स्म सुपुष्पिताः । शातकुम्भनिभाः केचित् केचिदग्निशिखोपमाः ॥ १०
नीलाञ्जननिभाः केचित्तत्राशोकाः सहस्रशः । नन्दनं विविधोद्यानं चित्रं चैत्ररथं यथा ॥ ११
अतिवृत्तमिवाचिन्त्यं दिव्यं रम्यं श्रियावृतम् । द्वितीयमिव चाकाशं पुष्पज्योतिर्गणायुतम् ॥ १२
पुष्परत्नशतैश्चित्रं पञ्चमं सागरं यथा [3] । सर्वर्तुपुष्पैर्निचितं पादपैर्मधुगन्धिभिः ॥ १३
नानानिनादैरुद्यानं रम्यं मृगगणैर्द्विजैः । अनेकगन्धप्रवहं पुण्यगन्धं मनोरमम् ॥ १४
शैलेन्द्रमिव गन्धाढ्यं द्वितीयं गन्धमादनम् । अशोकवनिकायां तु तस्यां वानरपुंगवः ॥ १५
स ददर्शाविदूरस्थं चैत्यप्रासादमुच्छ्रितम् । मध्ये स्तम्भसहस्रेण स्थितं कैलासपाण्डरम् ॥ १६

---

१. इदमर्धम् क. नास्ति ।
२. बह्वासगृहोपेताम् ग.
३. अतिवृत्तमित्यादि यथेत्यन्तम् ग. नास्ति ।

प्रवालकृतसोपानं तप्तकाञ्चनवेदिकम् । मुष्णन्तमिव चक्षूंषि द्योतमानमिव श्रिया ॥ १७
विमलं प्रांशुभावत्वादुल्लिखन्तमिवाम्बरम् । ततो मलिनसंवीतां राक्षसीभिः समावृताम् ॥ १८
उपवासकृशां दीनां निःश्वसन्तीं पुनः पुनः । ददर्श शुक्लपक्षादौ चन्द्ररेखामिवामलाम् ॥ १९
मन्दं प्रख्यायमानेन रूपेण रुचिरप्रभाम् । पिनद्धां धूमजालेन शिखामिव विभावसोः ॥ २०
पीतेनैकेन संवीतां क्लिष्टेनोत्तमवाससा । सपङ्कामनलंकारां विपद्मामिव पद्मिनीम् ॥ २१
व्रीडितां दुःखसंतप्तां परिम्लानां तपस्विनीम् । ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम् ॥ २२
अश्रुपूर्णमुखीं दीनां कृशामनशनेन च । शोकध्यानपरां दीनां[1] नित्यं दुःखपरायणाम् ॥ २३
प्रियं जनमपश्यन्तीं पश्यन्तीं राक्षसीगणम् । स्वगणेन मृगीं हीनां श्वगणाभिवृतामिव ॥ २४
नीलनागाभया वेण्या जघनं गतयैकया । नीलया नीरदापाये वनराज्या महीमिव ॥ २५
सुखार्हां दुःखसंतप्तां व्यसनानामकोविदाम् । तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ॥ २६
तर्कयामास सीतेति कारणैरुपपादिभिः । ह्रियमाणा तदा तेन रक्षसा कामरूपिणा ॥ २७
यथारूपा हि दृष्टा वै तथारूपेयमङ्गना । पूर्णचन्द्राननां सुभ्रूं चारुवृत्तपयोधराम् ॥ २८
कुर्वतीं प्रभया देवीं सर्वा वितिमिरा दिशः । तां नीलकेशीं बिम्बोष्ठीं सुमध्यां सुप्रतिष्ठिताम् ॥ २९
सीतां पद्मपलाशाक्षीं मन्मथस्य रतिं यथा । इष्टां सर्वस्य जगतः पूर्णचन्द्रप्रभामिव ॥ ३०
भूमौ सुतनुमासीनां नियतामिव तापसीम् । निःश्वासबहुलां भीरुं भुजगेन्द्रवधूमिव[2] ॥ ३१
शोकजालेन[3] महता विततेन न राजतीम् । संसक्तां धूमजालेन शिखामिव विभावसोः ॥ ३२
तां स्मृतीमिव संदिग्धामृद्धिं निपतितामिव । विहतामिव च श्रद्धामाशां प्रतिहतामिव ॥ ३३
सोपसर्गां यथा सिद्धिं बुद्धिं सकलुषामिव । अभूतेनापवादेन कीर्तिं निपतितामिव ॥ ३४
रामोपरोधव्यथितां रक्षोहरणकर्शिताम् । अबलां मृगशाबाक्षीं वीक्षमाणां [4]समन्ततः ॥ ३५
बाष्पाम्बुपरिपूर्णेन कृष्णवक्राक्षिपक्ष्मणा । वदनेनाप्रसन्नेन निःश्वसन्तीं पुनः पुनः ॥ ३६
मलपङ्कधरां दीनां मण्डनार्हाममण्डिताम् । प्रभां नक्षत्रराजस्य कालमेघैरिवावृताम् ॥ ३७
तस्य संदिदिहे बुद्धिर्मुहुः सीतां निरीक्ष्य तु । आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥ ३८
दुःखेन बुबुधे सीतां हनुमाननलंकृताम् । संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥ ३९
तां समीक्ष्य विशालाक्षीं राजपुत्रीमनिन्दिताम् । तर्कयामास सीतेति कारणैरुपपादिभिः ॥ ४०
वैदेह्या यानि चाङ्गेषु तदा रामोऽन्वकीर्तयत् । तान्याभरणजालानि [5]गात्रशोभीन्यलक्षयत् ॥ ४१
सुकृतौ कर्णवेष्टौ च श्वदंष्ट्रौ च सुसंस्थितौ । मणिविद्रुमचित्राणि हस्तेष्वाभरणानि च ॥ ४२
श्यामानि चिरयुक्तत्वात्तथा संस्थानवन्ति च । तान्येवैतानि मन्येऽहं यानि रामोऽन्वकीर्तयत् ॥ ४३

---

१. कृशामित्यादि दीनामित्यन्तं घ. नास्ति ।
२. इदमर्धम् ग. नास्ति ।
३. केशपाशेन ग.
४. ततस्ततः झ. ञ.
५. शाखाशोभीनि च. छ.

तत्र यान्यवहीनानि तान्यहं नोपलक्षये । यान्यस्या नावहीनानि तानीमानि न संशयः ॥ ४४
पीतं कनकपट्टाभं स्रस्तं तद्वसनं शुभम् । उत्तरीयं नगासक्तं तदा दृष्टं प्लवङ्गमैः ॥ ४५
भूषणानि विचित्राणि दृष्टानि धरणीतले । अनयैवापविद्धानि स्वनवन्ति महान्ति च ॥ ४६
इदं चिरगृहीतत्वाद्वसनं क्लिष्टवत्तरम् । तथापि नूनं तद्वर्णं तथा श्रीमद्यथेतरत् ॥ ४७
इयं कनकवर्णाङ्गी रामस्य महिषी प्रिया । प्रनष्टापि सती यास्य मनसो न प्रणश्यति ॥ ४८
इयं सा यत्कृते रामश्चतुर्भिः परितप्यते । कारुण्येनानृशंस्येन शोकेन मदनेन च ॥ ४९
स्त्री प्रनष्टेति कारुण्यादाश्रितेत्यानृशंस्यतः । पत्नी नष्टेति शोकेन प्रियेति मदनेन च ॥ ५०
अस्या देव्या यथा रूपमङ्गप्रत्यङ्गसौष्ठवम् । रामस्य च यथारूपं तस्येयमसितेक्षणा ॥ ५१
अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥ ५२
दुष्करं कृतवान् रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न शोकेनावसीदति ॥ ५३
एवं सीतां तदा दृष्ट्वा हृष्टः पवनसंभवः । जगाम मनसा रामं प्रशशंस च तं प्रभुम् ॥ ५४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे सीतोपलम्भो नाम पञ्चदशः सर्गः

---

## षोडशः सर्गः

### हनूमत्परीतापः

प्रशस्य तु प्रशस्तव्यां सीतां तां हरिपुंगवः । गुणाभिरामं रामं च पुनश्चिन्तापरोऽभवत् ॥ १
स मुहूर्तमिव ध्यात्वा बाष्पपर्याकुलेक्षणः । सीतामाश्रित्य तेजस्वी हनुमान् विललाप ह ॥ २
मान्या गुरुविनीतस्य लक्ष्मणस्य गुरुप्रिया । यदि सीतापि दुःखार्ता कालो हि दुरतिक्रमः ॥ ३
रामस्य व्यवसायज्ञा लक्ष्मणस्य च धीमतः । नात्यर्थं क्षुभ्यते देवी गङ्गेव जलदागमे ॥ ४
तुल्यशीलवयोवृत्तां तुल्याभिजनलक्षणाम् । राघवोऽर्हति वैदेहीं तं चेयमसितेक्षणा ॥ ५
तां दृष्ट्वा नवहेमाभां लोककान्तामिव श्रियम् । जगाम मनसा रामं वचनं चेदमब्रवीत् ॥ ६
अस्या हेतोर्विशालाक्ष्या हतो वाली महाबलः । रावणप्रतिमो वीर्ये कबन्धश्च निपातितः ॥ ७
विराधश्च हतः संख्ये राक्षसो भीमविक्रमः । वने रामेण विक्रम्य महेन्द्रेणेव शम्बरः[1] ॥ ८
चतुर्दश सहस्राणि रक्षसां भीमकर्मणाम् । निहतानि जनस्थाने शरैरग्निशिखोपमैः ॥ ९

---

1. शम्बरोऽयं मन्मथहतादन्यः कश्चिदसुर- इति तिलकः ।

१. अस्यानन्तरम् —दुष्करं कुरुते रामो य इमां मत्तकाशिनीम् । सीतां विना महाब हुर्मुहूर्तमपि जीवति ॥—इति च. छ.

खरश्च निहतः संख्ये त्रिशिराश्च निपातितः । दूषणश्च महातेजा रामेण विदितात्मना ॥ १०

ऐश्वर्यं वानराणां च दुर्लभं वालिपालितम् । अस्या निमित्ते सुग्रीवः प्राप्तवाँल्लोकसत्कृतम् ॥ ११

सागरश्च मया क्रान्तः श्रीमान्नदनदीपतिः । अस्या हेतोर्विशालाक्ष्याः पुरी चेयं निरीक्षिता ॥ १२

यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् । अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ॥ १३

राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा । त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात् कलाम् ॥ १४

इयं सा धर्मशीलस्य मैथिलस्य महात्मनः । सुता जनकराजस्य सीता भर्तृदृढव्रता ॥ १५

उत्थिता मेदिनीं भित्त्वा क्षेत्रे हलमुखक्षते । पद्मरेणुनिभैः कीर्णा शुभैः केदारपांसुभिः ॥ १६

विक्रान्तस्यार्यशीलस्य संयुगेष्वनिवर्तिनः । स्नुषा दशरथस्यैषा ज्येष्ठा राज्ञो यशस्विनी[१] ॥ १७

धर्मज्ञस्य कृतज्ञस्य रामस्य विदितात्मनः । इयं सा दयिता भार्या राक्षसीवशमागता ॥ १८

सर्वान् भोगान् परित्यज्य भर्तृस्नेहबलात्कृता । अचिन्तयित्वा दुःखानि प्रविष्टा निर्जनं वनम् ॥ १९

संतुष्टा फलमूलेन भर्तृशुश्रूषणे रता । या परां भजते प्रीतिं वनेऽपि भवने यथा ॥ २०

सेयं कनकवर्णाङ्गी नित्यं सुस्मितभाषिणी । सहते यातनामेतामनर्थानामभागिनी ॥ २१

इमां तु शीलसंपन्नां द्रष्टुमिच्छति[२] राघवः । रावणेन प्रमथितां प्रपामिव पिपासितः ॥ २२

अस्या नूनं पुनर्लाभाद्राघवः प्रीतिमेष्यति । राजा राज्यात् परिभ्रष्टः पुनः प्राप्येव मेदिनीम् ॥ २३

कामभोगैः परित्यक्ता हीना बन्धुजनेन च । धारयत्यात्मनो देहं तत्समागमकाङ्क्षिणी[३] ॥ २४

नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान् । एकस्थहृदया नूनं राममेवानुपश्यति ॥ २५

भर्ता नाम परं नार्या भूषणं भूषणादपि । एषा विरहिता तेन भूषणार्हा न शोभते ॥ २६

दुष्करं कुरुते रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न दुःखेनावसीदति ॥ २७

इमामसितकेशान्तां शतपत्रनिभेक्षणाम् । सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथितं मनः ॥ २८

क्षितिक्षमा पुष्करसंनिभाक्षी या रक्षिता राघवलक्ष्मणाभ्याम् ।
सा राक्षसीभिर्विकृतेक्षणाभिः संरक्ष्यते संप्रति वृक्षमूले ॥ २९

हिमहतनलिनीव नष्टशोभा व्यसनपरम्परयातिपीड्यमाना ।
सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना ॥ ३०

अस्या हि पुष्पावनताग्रशाखाः शोकं दृढं वै जनयन्त्यशोकाः ।
हिमव्यपायेन च [1]शीतरश्मिरभ्युत्थितो नैकसहस्ररश्मिः ॥ ३१

---

1. अभ्युत्थितः शीतरश्मिश्च अस्याः शोकं जनयतीत्यन्वयः । मन्दरश्मिः गो.

२. अर्हति च. छ.

३. लालसा प्र.

१. यशस्विनः ख.

इत्येवमर्थं कपिरन्ववेक्ष्य सीतेयमित्येव निविष्टबुद्धिः ।
संश्रित्य तस्मिन्निषसाद वृक्षे बली हरीणामृषभस्तरस्वी ॥ ३२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे हनूमत्परीतापो नाम षोडशः सर्गः

---

## सप्तदशः सर्गः

### राक्षसीपरिवारः

ततः कुमुदषण्डाभो निर्मलो निर्मलं स्वयम् । [1]प्रजगाम नभश्चन्द्रो हंसो नीलमिवोदकम् ॥ १
साचिव्यमिव कुर्वन् स प्रभया निर्मलप्रभः । चन्द्रमा रश्मिभिः शीतैः सिषेवे पवनात्मजम् ॥ २
स ददर्श ततः सीतां पूर्णचन्द्रनिभाननाम् । शोकभारैरिव न्यस्तां भारैर्नावमिवाम्भसि ॥ ३
दिदृक्षमाणो वैदेहीं हनुमान् पवनात्मजः । स ददर्शाविदूरस्था राक्षसीर्घोरदर्शनाः ॥ ४
एकाक्षीमेककर्णां च कर्णप्रावरणां तथा । अकर्णां शङ्कुकर्णां च मस्तकोच्छ्वासनासिकाम् ॥ ५
अतिकायोत्तमाङ्गीं च तनुदीर्घशिरोधराम् । ध्वस्तकेशीं तथाकेशीं केशकम्बलधारिणीम् ॥ ६
लम्बकर्णललाटां च लम्बोदरपयोधराम् । लम्बोष्ठीं चुबुकोष्ठीं च लम्बास्यां लम्बजानुकाम् ॥ ७
ह्रस्वां दीर्घां तथा कुब्जां विकटां वामनां तथा । करालां भुग्नवक्त्रां च पिङ्गाक्षीं विकृताननाम् ॥ ८
विकृताः पिङ्गलाः कालीः क्रोधनाः कलहप्रियाः । कालायसमहाशूलकूटमुद्गरधारिणीः ॥ ९
वराहमृगशार्दूलमहिषाजशिवामुखीः । गजोष्ट्रहयपादीश्च निखातशिरसोऽपराः ॥ १०
एकहस्तैकपादाश्च खरकर्ण्यश्वकर्णिकाः । गोकर्णीर्हस्तिकर्णीश्च हरिकर्णीस्तथापराः ॥ ११
अनासा अतिनासाश्च तिर्यङ्नासा विनासिकाः । गजसंनिभनासाश्च ललाटोच्छ्वासनासिकाः ॥ १२
हस्तिपादा महापादा गोपादाः पादचूलिकाः[१] । अतिमात्रशिरोग्रीवा अतिमात्रकुचोदरीः ॥ १३
अतिमात्रास्यनेत्राश्च दीर्घजिह्वानखास्तथा[२] । अजामुखीर्हस्तिमुखीर्गोमुखीः सूकरीमुखीः ॥ १४

---

1. प्रजगामेति; नभोमध्यादपरं भागमवरुरोहेत्यर्थः । हनूमतो लङ्काप्रवेशसमय एव हि चन्द्रोदय उक्तः—'चन्द्रोऽपि साचिव्यमिवास्य कुर्वंस्तारागणैर्मध्यगतो विराजन्' इति । तारागणमध्यावस्थानादधिकं विराजमान इत्यर्थः । रावणान्तःपुरप्रवेशश्च अर्धरात्र इत्युक्तम्—'ततः स मध्यंगतमंशुमन्तम्' इत्यादिना । तस्मात् रात्रेरन्तिमयामेऽशोकवनप्रवेश इति द्रष्टव्यम् । तिलके तु—प्रजगामेति उदितश्चन्द्रमा नभसः किञ्चिदुपरिभागं प्राप्त इत्यर्थ इति व्याख्यातम् । तत्र प्रथमदिवसे रात्रेस्तुर्ये यामे अशोकवनिकां प्रविश्य रात्रिशेषं ततः परं कृत्स्नमहश्च राक्षसीनां दर्शनपरिहाराय शिंशपावृक्ष एव लीनोऽतिवाहयामास । द्वितीयस्यां रात्रौ संवृत्तस्यार्थजातस्य वर्णनम्—'ततःकुमुदषण्डाभः' इत्यादीनि योजनीयम् । ईदृशेषु विचारेषु विस्तरः उपोद्घाते द्रष्टव्यः ॥

१. इदमर्धम् ग. नास्ति ।
२. दीर्घजिह्वाननास्तथा पुना.

हयोष्ट्रखरवक्त्राश्च राक्षसीर्घोरदर्शनाः । शूलमुद्गरहस्ताश्च क्रोधनाः कलहप्रियाः[१] ॥ १५
कराला धूम्रकेशीश्च राक्षसीर्विकृताननाः । पिबन्तीः सततं पानं सदा मांससुराप्रियाः ॥ १६
मांसशोणितदिग्धाङ्गीर्मांसशोणितभोजनाः । ता ददर्श कपिश्रेष्ठो रोमहर्षणदर्शनाः ॥ १७
स्कन्धवन्तमुपासीनाः परिवार्य वनस्पतिम् । तस्याधस्ताच्च तां देवीं राजपुत्रीमनिन्दिताम् ॥ १८
लक्षयामास लक्ष्मीवान् हनुमाञ्जनकात्मजाम् । निष्प्रभां शोकसंतप्तां मलसंकुलमूर्धजाम् ॥ १९
क्षीणपुण्यां च्युतां भूमौ तारां निपतितामिव । चारित्रव्यपदेशाढ्यां भर्तृदर्शनदुर्गताम् ॥ २०
भूषणैरुत्तमैर्हीनां भर्तृवात्सल्यभूषणाम् । राक्षसाधिपसंरुद्धां बन्धुभिश्च विनाकृताम् ॥ २१
वियूथां सिंहसंरुद्धां बद्धां गजवधूमिव । चन्द्ररेखां पयोदान्ते शारदाभ्रैरिवावृताम् ॥ २२
क्लिष्टरूपामसंस्पर्शादयुक्तामिव वल्लकीम् । सीतां भर्तृवशे युक्तामयुक्तां राक्षसीवशे ॥ २३
अशोकवनिकामध्ये शोकसागरमाप्लुताम् । ताभिः परिवृतां तत्र सग्रहामिव रोहिणीम् ॥ २४
ददर्श हनुमान् देवीं लतामकुसुमामिव । सा मलेन च दिग्धाङ्गी वपुषा चाप्यलंकृता ॥ २५
मृणाली पङ्कदिग्धेव विभाति न विभाति च । मलिनेन च वस्त्रेण परिक्लिष्टेन भामिनीम् ॥ २६
संवृतां मृगशावाक्षीं ददर्श हनुमान् कपिः । [1]तां देवीं दीनवदनामदीनां भर्तृतेजसा ॥ २७
रक्षितां स्वेन शीलेन सीतामसितलोचनाम् । तां दृष्ट्वा हनुमान् सीतां मृगशावनिभेक्षणाम् ॥ २८
मृगकन्यामिव त्रस्तां वीक्षमाणां समन्ततः । दहन्तीमिव निःश्वासैर्वृक्षान् पल्लवधारिणः ॥ २९
सङ्घातमिव शोकानां दुःखस्योर्मिमिवोत्थिताम् । तां क्षामां[२] सुविभक्ताङ्गीं विनाभरणशोभिनीम् ॥ ३०
प्रहर्षमतुलं लेभे मारुतिः प्रेक्ष्य मैथिलीम् । हर्षजानि च सोऽश्रूणि तां दृष्ट्वा मदिरेक्षणाम् ॥ ३१
मुमोच हनुमांस्तत्र नमश्चक्रे च राघवम् । नमस्कृत्वा स रामाय लक्ष्मणाय च वीर्यवान् ॥ ३२
सीतादर्शनसंहृष्टो हनुमान् संवृतोऽभवत् ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे राक्षसीपरिवारो नाम सप्तदशः सर्गः

---

## अष्टादशः सर्गः

### रावणागमनम्

तथा विप्रेक्षमाणस्य वनं पुष्पितपादपम् । विचिन्वतश्च वैदेहीं किंचिच्छेषा निशाभवत् ॥ १
षडङ्गवेदविदुषां क्रतुप्रवरयाजिनाम् । शुश्राव ब्रह्मघोषांश्च विरात्रे ब्रह्मरक्षसाम् ॥ २

---

1. तां दृष्ट्वेति ; इदमुपरितनेषु सीताविशेषणेषु प्रत्येकमभिसंबध्यते। एतत्सूचनार्थमेव चावसाने तां प्रेक्ष्य मैथिलीमिति पुनः प्रयोगः । एतदुक्तं भवति, बहून् वारान् मारुतिः सीतां ददर्श । एकैकस्मिंश्च दर्शने प्रत्येकमेकैको विशेषणांशः तस्य गोचरो बभूवेति ।

१. इदमर्धम् क. नास्ति ।

२. क्षमाम् च. समाम् छ.

अथ मङ्गलवादित्रैः शब्दैः श्रोत्रमनोहरैः । प्राबुध्यत महाबाहुर्दशग्रीवो महाबलः ॥ ३

विबुध्य तु यथाकालं राक्षसेन्द्रः प्रतापवान् । स्रस्तमाल्याम्बरधरो वैदेहीमन्वचिन्तयत् ॥ ४

भृशं नियुक्तस्तस्यां च मदनेन मदोत्कटः । न स तं राक्षसः कामं शशाकात्मनि गूहितुम् ॥ ५

स सर्वाभरणैर्युक्तो बिभ्रच्छ्रियमनुत्तमाम् । तां नगैर्बहुभिर्जुष्टां सर्वपुष्पफलोपगैः ॥ ६

वृतां पुष्करिणीभिश्च नानापुष्पोपशोभिताम् । सदामदैश्च विहगैर्विचित्रां परमाद्भुतैः ॥ ७

ईहामृगैश्च विविधैर्जुष्टां दृष्टिमनोहरैः । वीथीः संप्रेक्षमाणश्च मणिकाञ्चनतोरणाः ॥ ८

नानामृगगणाकीर्णां फलैः प्रपतितैर्वृताम् । अशोकवनिकामेव प्राविशत् संततद्रुमाम् ॥ ९

अङ्गनाः शतमात्रं तु तं व्रजन्तमनुव्रजन्[1] । महेन्द्रमिव[1] पौलस्त्यं देवगन्धर्वयोषितः ॥ १०

दीपिकाः काञ्चनीः काश्चिज्जगृहुस्तत्र योषितः । वालव्यजनहस्ताश्च तालवृन्तानि चापराः ॥ ११

काञ्चनैरपि भृङ्गारैर्जह्रुः सलिलमग्रतः । मण्डलाग्रा बृसीश्चैव[2] गृह्यान्याः पृष्ठतो ययुः ॥ १२

काचिद्रत्नमयीं स्थालीं[3] पूर्णां पानस्य भामिनी । दक्षिणा दक्षिणेनैव[4] तदा जग्राह पाणिना ॥ १३

राजहंसप्रतीकाशं छत्रं पूर्णशशिप्रभम् । सौवर्णदण्डमपरा गृहीत्वा पृष्ठतो ययौ ॥ १४

निद्रामदपरीताक्ष्यो रावणस्योत्तमाः स्त्रियः । अनुजग्मुः पतिं वीरं घनं विद्युल्लता इव ॥ १५

व्याविद्धहारकेयूराः समामृदितवर्णकाः । समागलितकेशान्ताः सस्वेदवदनास्तथा ॥ १६

घूर्णन्त्यो मदशेषेण निद्रया च शुभाननाः । स्वेदक्लिष्टाङ्गकुसुमाः सुमाल्याकुलमूर्धजाः ॥ १७

प्रयान्तं नैर्ऋतपतिं नार्यो मदिरलोचनाः । बहुमानाच्च कामाच्च प्रिया भार्यास्तमन्वयुः ॥ १८

स च कामपराधीनः पतिस्तासां महाबलः । सीतासक्तमना मन्दो मदाञ्चितगतिर्बभौ ॥ १९

ततः काञ्चीनिनादं च नूपुराणां च निःस्वनम् । शुश्राव परमस्त्रीणां स कपिर्मारुतात्मजः ॥ २०

तं चाप्रतिमकर्माणमचिन्त्यबलपौरुषम् । द्वारदेशमनुप्राप्तं ददर्श हनुमान् कपिः ॥ २१

दीपिकाभिरनेकाभिः समन्तादवभासितम् । गन्धतैलावसिक्ताभिर्ध्रियमाणाभिरग्रतः ॥ २२

कामदर्पमदैर्युक्तं जिह्मताम्रायतेक्षणम् । समक्षमिव कंदर्पमपविद्धशरासनम् ॥ २३

मथितामृतफेनाभमरजो वस्त्रमुत्तमम् । सलीलमनुकर्षन्तं विमुक्तं सक्तमङ्गदे ॥ २४

तं पत्रविटपे लीनः पत्रपुष्पघनावृतः । समीपमुपसंक्रान्तं निध्यातुमुपचक्रमे ॥ २५

अवेक्षमाणस्तु ततो ददर्श कपिकुञ्जरः । रूपयौवनसंपन्ना रावणस्य वरस्त्रियः ॥ २६

---

1. इह प्रयोगलाघवादिवशब्दस्तन्त्रेणोच्चरितः । महेन्द्रमिव स्थितं पौलस्त्यं देवगन्धर्वयोषित इव अन्वगच्छन्नित्यर्थः ।

१. अङ्गनाशतमात्रं तु तं व्रजन्तमनुव्रजत् च. छ.

२. मण्डलाग्रान् बृसीं चैव च. मण्डलाग्रानसींश्चैव छ.

३. पात्रीम् ख. च. छ.

४. एका छ.

ताभिः परिवृतो राजा सुरूपाभिर्महायशाः । तन्मृगद्विजसंघुष्टं प्रविष्टः प्रमदावनम् ॥ २७
क्षीबो विचित्राभरणः शङ्कुकर्णो महाबलः । तेन विश्रवसः पुत्रः स दृष्टो राक्षसाधिपः ॥ २८
वृतः परमनारीभिस्ताराभिरिव चन्द्रमाः । तं ददर्श महातेजास्तेजोवन्तं महाकपिः ॥ २९
रावणोऽयं महाबाहुरिति संचिन्त्य वानरः । सोऽयमेव पुरा शेते पुरमध्ये गृहोत्तमे[1] ॥ ३०
अवप्लुतो महातेजा हनुमान् मारुतात्मजः । स तथाप्युग्रतेजाः सन्निर्धूतस्तस्य तेजसा ॥ ३१
पत्रगुल्मान्तरे सक्तो हनुमान् संवृतोऽभवत् । [2]स तामसितकेशान्तां सुश्रोणीं संहतस्तनीम् ॥ ३२
दिदृक्षुरसितापाङ्गामुपावर्तत रावणः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे रावणागमनं नाम अष्टादशः सर्गः

---

## एकोनविंशः सर्गः

### कृच्छ्रगतसीतोपमाः

तस्मिन्नेव ततः काले राजपुत्री त्वनिन्दिता । रूपयौवनसंपन्नं भूषणोत्तमभूषितम् ॥ १
ततो दृष्ट्वैव वैदेही रावणं राक्षसाधिपम् । प्रावेपत वरारोहा प्रवाते कदली यथा ॥ २
आच्छाद्योदरमूरुभ्यां बाहुभ्यां च पयोधरौ । उपविष्टा विशालाक्षी रुदन्ती वरवर्णिनी ॥ ३
दशग्रीवस्तु वैदेहीं रक्षितां राक्षसीगणैः । ददर्श सीतां दुःखार्तां नावं सन्नामिवार्णवे ॥ ४
असंवृतायामासीनां धरण्यां संशितव्रताम् । छिन्नां प्रपतितां भूमौ शाखामिव वनस्पतेः ॥ ५
मलमण्डनदिग्धाङ्गीं[3] मण्डनार्हाममण्डिताम् । मृणाली पङ्कदिग्धेव विभाति न विभाति च ॥ ६
समीपं राजसिंहस्य रामस्य विदितात्मनः । संकल्पहयसंयुक्तैर्यान्तीमिव मनोरथैः ॥ ७
शुष्यन्तीं रुदतीमेकां ध्यानशोकपरायणाम् । दुःखस्यान्तमपश्यन्तीं रामां राममनुव्रताम् ॥ ८
वेष्टमानां तथाविष्टां पन्नगेन्द्रवधूमिव । धूप्यमानां ग्रहेणेव रोहिणीं धूमकेतुना ॥ ९
वृत्तशीलकुले जातामाचारवति धार्मिके । पुनः संस्कारमापन्नां जातामिव च दुष्कुले ॥ १०
अभूतेनापवादेन कीर्तिं निपतितामिव । आम्नायानामयोगेन विद्यां प्रशिथिलामिव[4] ॥ ११
सन्नामिव महाकीर्तिं श्रद्धामिव विमानिताम् । प्रज्ञामिव परिक्षीणामाशां प्रतिहतामिव ॥ १२
आयतीमिव विध्वस्तामाज्ञां प्रतिहतामिव । दीप्तामिव दिशं काले पूजामपहृतामिव ॥ १३
पद्मिनीमिव विध्वस्तां हतशूरां चमूमिव । प्रभामिव तमोध्वस्तामुपक्षीणामिवापगाम् ॥ १४
वेदीमिव परामृष्टां शान्तामग्निशिखामिव । पौर्णमासीमिव निशां राहुग्रस्तेन्दुमण्डलाम् ॥ १५
उत्कृष्टपर्णकमलां वित्रासितविहङ्गमाम् । हस्तिहस्तपरामृष्टामाकुलां पद्मिनीमिव ॥ १६

---

१. इदमर्धम् च. छ. नास्ति ।
२. सीताम् ध. छ.
३. -चित्राङ्गीम् च. छ.
४. इदं पद्यं प्र. नास्ति । इदमर्धं अस्मिन् एव काण्डे पञ्चदशे सर्गे पठितपूर्वम् ।

पतिशोकातुरां शुष्कां नदीं विस्राविताम् इव । परया मृजया[1] हीनां कृष्णपक्षनिशामिव ।। १७
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् । तप्यमानामिवोष्णेन मृणालीमचिरोद्धृताम् ।। १८
गृहीतामालितां[1] स्तम्भे यूथपेन विनाकृताम् । निःश्वसन्तीं सुदुःखार्तां गजराजवधूमिव ।। १९
एकया दीर्घया वेण्या शोभमानामयत्नतः । नीलया नीरदापाये वनराज्या महीमिव ।। २०
उपवासेन शोकेन ध्यानेन च भयेन च । परिक्षीणां कृशां दीनामल्पाहारां तपोधनाम् ।। २१
आयाचमानां दुःखार्तां प्राञ्जलिं देवतामिव । भावेन रघुमुख्यस्य दशग्रीवपराभवम् ।। २२

समीक्षमाणां रुदतीमनिन्दितां सुपक्ष्मताम्रायतशुक्ललोचनाम् ।
अनुव्रतां राममतीव मैथिलीं प्रलोभयामास वधाय रावणः ।। २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे कृच्छ्रगतसीतोपमा नाम एकोनविंशः सर्गः

---

## विंशः सर्गः

### प्रणयप्रार्थना

स तां पतिव्रतां दीनां निरानन्दां तपस्विनीम् । साकारैर्मधुरैर्वाक्यैर्न्यदर्शयत रावणः ।। १
मां दृष्ट्वा नागनासोरु गूहमाना स्तनोदरम् । अदर्शनमिवात्मानं भयान्नेतुं त्वमिच्छसि ।। २
कामये त्वां विशालाक्षि बहु मन्यस्व मां प्रिये । सर्वाङ्गगुणसंपन्ने सर्वलोकमनोहरे ।। ३
नेह केचिन्मनुष्या वा राक्षसाः कामरूपिणः । व्यपसर्पतु ते सीते भयं मत्तः समुत्थितम् ।। ४
स्वधर्मो रक्षसां भीरु सर्वथैव न संशयः । गमनं वा परस्त्रीणां हरणं संप्रमथ्य वा ।। ५
एवं चैतदकामां तु न त्वां स्प्रक्ष्यामि मैथिलि । कामं कामः शरीरे मे यथाकामं प्रवर्तताम् ।। ६
देवि नेह भयं कार्यं मयि विश्वसिहि प्रिये । प्रणयस्व च तत्त्वेन मैवं भूः शोकलालसा ।। ७
एकवेणी धरा शय्या ध्यानं मलिनमम्बरम् । अस्थानेऽप्युपवासश्च नैतान्यौपयिकानि ते ।। ८
विचित्राणि च माल्यानि चन्दनान्यगरूणि च । विविधानि च वासांसि दिव्यान्याभरणानि च ।। ९
महार्हाणि च पानानि शयनान्यासनानि च । गीतं नृत्तं च वाद्यं च लभ मां प्राप्य मैथिलि ।। १०
स्त्रीरत्नमसि मैवं भूः कुरु गात्रेषु भूषणम् । मां प्राप्य हि कथं नु स्यास्त्वमनर्हा सुविग्रहे ।। ११
इदं ते चारु संजातं यौवनं ह्यतिवर्तते । यदतीतं पुनर्नैति स्रोतः शीघ्रमपामिव ।। १२
त्वां कृत्वोपरतो मन्ये रूपकर्ता स विश्वसृट् । न हि रूपोपमा त्वन्या तवास्ति शुभदर्शने ।। १३
त्वां समासाद्य वैदेहि रूपयौवनशालिनीम् । कः पुमानतिवर्तेत[2] साक्षादपि पितामहः ।। १४

---

1. मृजा अङ्गशुद्धिः । लाडिताम् ति.
१. आयताम् छ. २. नातिवर्तेत ति.

यद्यत् पश्यामि ते गात्रं शीतांशुसदृशानने । तस्मिंस्तस्मिन् पृथुश्रोणि चक्षुर्मम निबध्यते ॥ १५
भव मैथिलि भार्या मे मोहमेनं विसर्जय । बह्वीनामुत्तमस्त्रीणां ममाग्रमहिषी भव ॥ १६
लोकेभ्यो यानि रत्नानि संप्रमथ्याहृतानि वै । तानि मे भीरु सर्वाणि राज्यं चैतदहं च ते ॥ १७
विजित्य पृथिवीं सर्वां नानानगरमालिनीम् । जनकाय प्रदास्यामि तव हेतोर्विलासिनि ॥ १८
नेह पश्यामि लोकेऽन्यं यो मे प्रतिबलो भवेत् । पश्य मे सुमहद्वीर्यमप्रतिद्वन्द्वमाहवे ॥ १९
असकृत् संयुगे भग्ना मया विमृदितध्वजाः । अशक्ताः प्रत्यनीकेषु स्थातुं मम सुरासुराः ॥ २०
इच्छया क्रियतामद्य प्रतिकर्म तवोत्तमम् । सप्रभाण्यवसज्यन्तां तवाङ्गे भूषणानि च ॥ २१
साधु पश्यामि ते रूपं संयुक्तं प्रतिकर्मणा । प्रतिकर्माभिसंयुक्ता दाक्षिण्येन वरानने ॥ २२
भुङ्क्ष्व भोगान् यथाकामं पिब भीरु रमस्व च । यथेष्टं च प्रयच्छ त्वं पृथिवीं वा धनानि च ॥२३
रमस्व मयि विस्रब्धा धृष्टमाज्ञापयस्व च[2] । मत्प्रसादाल्ललन्त्याश्च ललन्तां बान्धवास्तव ॥ २४
ऋद्धिं ममानुपश्य त्वं श्रियं भद्रे यशश्च मे । किं करिष्यसि रामेण सुभगे चीरवाससा ॥ २५
निक्षिप्तविजयो रामो गतश्रीर्वनगोचरः । व्रती स्थण्डिलशायी च शङ्के जीवति वा न वा ॥ २६
न हि वैदेहि रामस्त्वां द्रष्टुं वाप्युपलप्स्यते । पुरोबलाकैरसितैर्मेघैर्ज्योत्स्नामिवावृताम् ॥ २७
न चापि मम हस्तात्त्वां प्राप्तुमर्हति राघवः । हिरण्यकशिपुः कीर्तिमिन्द्रहस्तगतामिव ॥ २८
चारुस्मिते चारुदति चारुनेत्रे विलासिनि । मनो हरसि मे भीरु सुपर्णः पन्नगं यथा ॥ २९[1]
क्लिष्टकौशेयवसनां तन्वीमप्यनलंकृताम् । त्वां दृष्ट्वा स्वेषु दारेषु रतिं नोपलभाम्यहम् ॥ ३०
अन्तःपुरनिवासिन्यः स्त्रियः सर्वगुणान्विताः । यावत्यो मम सर्वासामैश्वर्यं कुरु जानकि ॥ ३१
मम ह्यसितकेशान्ते त्रैलोक्यप्रवराः स्त्रियः । तास्त्वां परिचरिष्यन्ति श्रियमप्सरसो यथा ॥ ३२
यानि वैश्रवणे सुभ्रू रत्नानि च धनानि च । तानि लोकांश्च सुश्रोणि मां च भुङ्क्ष्व यथासुखम् ॥३३
न रामस्तपसा देवि न बलेन न विक्रमैः । न धनेन मया तुल्यस्तेजसा यशसापि वा ॥ ३४

पिब विहर रमस्व भुङ्क्ष्व भोगान् धननिचयं प्रदिशामि मेदिनीं च ।
मयि लल ललने यथासुखं त्वं त्वयि च समेत्य ललन्तु बान्धवास्ते ॥ ३५

कुसुमिततरुजालसंततानि भ्रमरयुतानि समुद्रतीरजानि ।
कनकविमलहारभूषिताङ्गि विहर मया सह भीरु काननानि ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे प्रणयप्रार्थना नाम विंशः सर्गः

---

१. अस्यानन्तरम्—आहृतानामितस्ततः । सर्वासामेव भद्रं ते—इति च. छ.

२. यथेष्टमित्यादि आज्ञापयस्व चेत्यन्तम् ख. नास्ति ।

# एकविंशः सर्गः

## रावणतृणीकरणम्

तस्य तद्वचनं श्रुत्वा सीता रौद्रस्य रक्षसः । आर्ता दीनस्वरा दीनं प्रत्युवाच शनैर्वचः ॥ १
दुःखार्ता रुदती सीता वेपमाना तपस्विनी । चिन्तयन्ती वरारोहा पतिमेव पतिव्रता ॥ २
तृणमन्तरतः कृत्वा प्रत्युवाच शुचिस्मिता । निवर्तय मनो मत्तः स्वजने क्रियतां मनः ॥ ३
न मां प्रार्थयितुं युक्तं सुसिद्धिमिव पापकृत् । अकार्यं न मया कार्यमेकपत्न्या विगर्हितम् ॥ ४
कुलं संप्राप्तया पुण्यं कुले महति जातया । एवमुक्त्वा तु वैदेही रावणं तं यशस्विनी ॥ ५
राक्षसं पृष्ठतः कृत्वा भूयो वचनमब्रवीत् । नाहमौपयिकी भार्या परभार्या सती तव ॥ ६
साधु धर्ममवेक्षस्व साधु साधुव्रतं चर । यथा तव तथान्येषां दारा रक्ष्या निशाचर ॥ ७
आत्मानमुपमां कृत्वा स्वेषु दारेषु रम्यताम् । अतुष्टं स्वेषु दारेषु चपलं चलितेन्द्रियम् ॥ ८
नयन्ति निकृतिप्रज्ञं परदाराः पराभवम् । इह सन्तो न वा सन्ति सतो वा नानुवर्तसे ॥ ९
तथा हि विपरीता ते बुद्धिराचारवर्जिता । वचो मिथ्याप्रणीतात्मा पथ्यमुक्तं विचक्षणैः ॥ १०
राक्षसानामभावाय त्वं वा न प्रतिपद्यसे । अकृतात्मानमासाद्य राजानमनये रतम् ॥ ११
समृद्धानि विनश्यन्ति राष्ट्राणि नगराणि च । तथेयं त्वां समासाद्य लङ्का रत्नौघसंकुला ॥ १२
अपराधात्तवैकस्य न चिराद्विनशिष्यति । स्वकृतैर्हन्यमानस्य रावणादीर्घदर्शिनः ॥ १३
अभिनन्दन्ति भूतानि विनाशे पापकर्मणः । एवं त्वां पापकर्माणं वक्ष्यन्ति निकृता जनाः ॥ १४
दिष्ट्यैतद्व्यसनं प्राप्तो रौद्र इत्येव हर्षिताः । शक्या लोभयितुं नाहमैश्वर्येण धनेन वा ॥ १५
अनन्या राघवेणाहं भास्करेण प्रभा यथा । उपधाय भुजं तस्य लोकनाथस्य सत्कृतम् ॥ १६
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित् । अहमौपयिकी भार्या तस्यैव वसुधापतेः ॥ १७
व्रतस्नातस्य विप्रस्य विद्येव विदितात्मनः । साधु रावण रामेण मां समानय दुःखिताम् ॥ १८
वने वासितया सार्धं करेण्वेव गजाधिपम् । मित्रमौपयिकं कर्तुं रामः स्थानं परीप्सता ॥ १९
वधं चानिच्छता घोरं त्वयासौ पुरुषर्षभः । विदितः स हि धर्मज्ञः शरणागतवत्सलः ॥ २०
तेन मैत्री भवतु ते यदि जीवितुमिच्छसि । प्रसादयस्व त्वं चैनं शरणागतवत्सलम् ॥ २१
मां चास्मै प्रयतो भूत्वा निर्यातयितुमर्हसि । एवं हि ते भवेत् स्वस्ति संप्रदाय रघूत्तमे ॥ २२
अन्यथा त्वं हि कुर्वाणो वधं प्राप्स्यसि रावण[1] । वर्जयेद्वज्रमुत्सृष्टं वर्जयेदन्तकश्चिरम् ॥ २३
त्वद्विधं तु न संक्रुद्धो लोकनाथः स राघवः । रामस्य धनुषः शब्दं श्रोष्यसि त्वं महास्वनम् ॥ २४
शतक्रतुविसृष्टस्य निर्घोषमशनेरिव । इह शीघ्रं सुपर्वाणो ज्वलितास्या इवोरगाः ॥ २५
इषवो निपतिष्यन्ति रामलक्ष्मणलक्षणाः । रक्षांसि परिनिघ्नन्तः पुर्यामस्यां समन्ततः ॥ २६
असंपातं करिष्यन्ति पतन्तः कङ्कवाससः । राक्षसेन्द्रमहासर्पान् स रामगरुडो महान् ॥ २७

---

१. परां प्राप्स्यसि चापदम् पुना.

उद्धरिष्यति वेगेन वैनतेय इवोरगान् । अपनेष्यति मां भर्ता त्वत्तः शीघ्रमरिंदमः ॥ २८
असुरेभ्यः श्रियं दीप्तां विष्णुस्त्रिभिरिव क्रमैः । जनस्थाने हतस्थाने निहते रक्षसां बले ॥ २९
अशक्तेन त्वया रक्षः कृतमेतदसाधु वै । आश्रमं तु तयोः शून्यं प्रविश्य नरसिंहयोः ॥ ३०
गोचरं गतयोर्भ्रात्रोरपनीता त्वयाधम । न हि गन्धमुपाघ्राय रामलक्ष्मणयोस्त्वया ॥ ३१
शक्यं संदर्शने स्थातुं शुना शार्दूलयोरिव । तस्य ते विग्रहे ताभ्यां युगग्रहणमस्थिरम् ॥ ३२
वृत्रस्येवेन्द्रबाहुभ्यां बाहोरेकस्य निग्रहः । क्षिप्रं तव स नाथो मे रामः सौमित्रिणा सह ॥ ३३
तोयमल्पमिवादित्यः प्राणानादास्यते शरैः ॥

गिरिं कुबेरस्य गतोऽथ वालयं सभां गतो वा वरुणस्य राज्ञः ।
असंशयं दाशरथेर्न मोक्ष्यसे महाद्रुमः कालहतोऽशनेरिव ॥ ३४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे रावणतृणीकरणं नाम एकविंशः सर्गः

---

## द्वाविंशः सर्गः

### मासद्वयावधिकरणम्

सीताया वचनं श्रुत्वा परुषं राक्षसाधिपः । प्रत्युवाच ततः सीतां विप्रियं प्रियदर्शनाम् ॥ १
यथा यथा सान्त्वयिता वश्यः स्त्रीणां तथा तथा । यथा यथा प्रियं वक्ता परिभूतस्तथा तथा ॥ २
संनियच्छति मे क्रोधं त्वयि कामः समुत्थितः । द्रवतोऽमार्गमासाद्य हयानिव सुसारथिः[1] ॥ ३
वामः कामो मनुष्याणां यस्मिन् किल निबध्यते । जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते ॥ ४
एतस्मात् कारणान्न त्वां घातयामि वरानने । वधार्हामवमानार्हां मिथ्याप्रव्रजिते[2] रताम् ॥ ५
परुषाणीह वाक्यानि यानि यानि ब्रवीषि माम् । तेषु तेषु वधो युक्तस्तव मैथिलि दारुणः ॥ ६
एवमुक्त्वा तु वैदेहीं रावणो राक्षसाधिपः । क्रोधसंरम्भसंयुक्तः सीतामुत्तरमब्रवीत् ॥ ७
द्वौ मासौ रक्षितव्यौ मे योऽवधिस्ते मया कृतः । ततः शयनमारोह मम त्वं वरवर्णिनि ॥ ८
द्वाभ्यामूर्ध्वं तु मासाभ्यां भर्तारं मामनिच्छतीम् । मम त्वां प्रातराशार्थमालभन्ते महानसे[3] ॥ ९
तां तर्ज्यमानां संप्रेक्ष्य राक्षसेन्द्रेण जानकीम् । देवगन्धर्वकन्यास्ता विषेदुर्विपुलेक्षणाः ॥ १०
ओष्ठप्रकारैरपरा वक्त्रैर्नेत्रैस्तथापराः । सीतामाश्वासयामासुस्तर्जितां तेन रक्षसा ॥ ११
ताभिराश्वासिता सीता रावणं राक्षसाधिपम् । उवाचात्महितं वाक्यं वृत्तशौण्डीर्यगर्वितम् ॥ १२
नूनं न ते जनः कश्चिदस्ति निःश्रेयसे स्थितः । निवारयति यो न त्वां कर्मणोऽस्माद्विगर्हितात् ॥ १३

---

१. द्रवतो मार्गम् च. छ.
२. प्रव्राजने ख. ग. घ.
३. सूदाश्छेत्स्यन्ति खण्डशः पुना.

मां हि धर्मात्मनः पत्नीं शचीमिव शचीपतेः। त्वदन्यस्त्रिषु लोकेषु प्रार्थयेन्मनसापि कः॥ १४
राक्षसाधम रामस्य भार्याममिततेजसः। उक्तवानसि यत् पापं क्व गतस्तस्य मोक्ष्यसे॥ १५
यथा दृप्तश्च मातङ्गः शशश्च सहितो वने। तथा द्विरदवद्रामस्त्वं नीच शशवत् स्मृतः॥ १६
स त्वमिक्ष्वाकुनाथं वै क्षिपन्निह न लज्जसे। चक्षुषोर्विषयं तस्य न तावदुपगच्छसि॥ १७
इमे ते नयने क्रूरे विरूपे कृष्णपिङ्गले। क्षितौ न पतिते कस्मान्मामनार्य निरीक्षतः॥ १८
तस्य धर्मात्मनः पत्नीं स्नुषां दशरथस्य च। कथं व्याहरतो मां ते न जिह्वा व्यवशीर्यते[1]॥ १९
असंदेशात्तु रामस्य तपसश्चानुपालनात्। न त्वां कुर्मि दशग्रीव भस्म भस्मार्हतेजसा॥ २०
नापहर्तुमहं शक्या तस्य रामस्य धीमतः। विधिस्तव वधार्थाय विहितो नात्र संशयः॥ २१
शूरेण धनदभ्रात्रा बलैः समुदितेन च। अपोह्य रामं कस्माद्धि दारचौर्यं त्वया कृतम्॥ २२
सीताया वचनं श्रुत्वा रावणो राक्षसाधिपः। विवृत्य नयने क्रूरे जानकीमन्ववैक्षत॥ २३
नीलजीमूतसंकाशो महाभुजशिरोधरः। सिंहसत्त्वगतिः श्रीमान् दीप्तजिह्वाग्रलोचनः॥ २४
चलाग्रमुकुटप्रांशुश्चित्रमाल्यानुलेपनः। रक्तमाल्याम्बरधरस्तप्ताङ्गदविभूषणः॥ २५
श्रोणीसूत्रेण महता मेचकेन सुसंवृतः। अमृतोत्पादनद्धेन भुजगेनेव मन्दरः॥ २६
द्वाभ्यां स परिपूर्णाभ्यां भुजाभ्यां राक्षसेश्वरः। शुशुभेऽचलसंकाशः शृङ्गाभ्यामिव मन्दरः॥ २७
तरुणादित्यवर्णाभ्यां कुण्डलाभ्यां विभूषितः। रक्तपल्लवपुष्पाभ्यामशोकाभ्यामिवाचलः॥ २८
स कल्पवृक्षप्रतिमो वसन्त इव मूर्तिमान्। श्मशानचैत्यप्रतिमो भूषितोऽपि भयङ्करः॥ २९
अवेक्षमाणो वैदेहीं कोपसंरक्तलोचनः। उवाच रावणः सीतां भुजङ्ग इव निःश्वसन्॥ ३०
अनयेनाभिसंपन्नमर्थहीनमनुव्रते। नाशयाम्यहमद्य त्वां सूर्यः सन्ध्यामिवौजसा॥ ३१
इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः। संदिदेश[2] ततः सर्वा राक्षसीर्घोरदर्शनाः॥ ३२
एकाक्षीमेककर्णां च कर्णप्रावरणां तथा। गोकर्णीं हस्तिकर्णीं च लम्बकर्णीमकर्णिकाम्॥ ३३
हस्तिपाद्यश्वपाद्यौ च गोपदीं पादचूलिकाम्। [1]एकाक्षीमेकपादीं च पृथुपादीमपादिकाम्॥ ३४
अतिमात्रशिरोग्रीवामतिमात्रकुचोदरीम्। अतिमात्रास्यनेत्रां च दीर्घजिह्वामजिह्विकाम्॥ ३५
अनासिकां सिंहमुखीं गोमुखीं सूकरीमुखीम्। यथा मद्वशगा सीता क्षिप्रं भवति जानकी॥ ३६
तथा कुरुत राक्षस्यः सर्वाः क्षिप्रं समेत्य च। प्रतिलोमानुलोमैश्च सामदानादिभेदनैः॥ ३७
आवर्जयत वैदेहीं दण्डस्योद्यमनेन च। इति प्रतिसमादिश्य राक्षसेन्द्रः पुनः पुनः॥ ३८
काममन्युपरीतात्मा जानकीं पर्यतर्जयत्[3]। उपगम्य ततः क्षिप्रं राक्षसी [2]धान्यमालिनी॥ ३९

---

1. एकाक्षीति द्विरुपादानं व्यक्तिभेदादिति माणत्वादिति श्रीगोविन्दराजः। तिलकः।

2. धान्यमालिनी रावणस्य कनिष्ठपत्नी। इदं मन्दोदर्या उपलक्षणम्। उत्तरत्र हनूमद्वचने तथा वक्ष्य-

१. जिह्वा पाप न शीर्यते ख. घ. छ.
२. संददर्श ति.
३. प्रतिगर्जत ति.

परिष्वज्य दशग्रीवमिदं वचनमब्रवीत् । मया क्रीड महाराज सीतया किं तवानया ॥ ४०
विवर्णया कृपणया मानुष्या राक्षसेश्वर । नूनमस्या महाराज न दिव्यान् भोगसत्तमान् ॥ ४१
विदधात्यमरश्रेष्ठस्तव बाहुबलार्जितान् । अकामां कामयानस्य शरीरमुपतप्यते ॥ ४२
इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना[1] । एवमुक्तस्तु राक्षस्या समुत्क्षिप्तस्ततो बली ॥ ४३
प्रहसन् मेघसंकाशो राक्षसः स न्यवर्तत । प्रस्थितः स दशग्रीवः कम्पयन्निव मेदिनीम् ॥ ४४
ज्वलद्भास्करवर्णाभं प्रविवेश निवेशनम् । देवगन्धर्वकन्याश्च नागकन्याश्च सर्वतः ॥ ४५
परिवार्य दशग्रीवं विविशुस्तद्गृहोत्तमम् ॥

स मैथिलीं धर्मपरामवस्थितां प्रवेपमानां परिभर्त्स्य रावणः ।
विहाय सीतां मदनेन मोहितः स्वमेव वेश्म प्रविवेश भास्वरम् ॥ ४६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
सुन्दरकाण्डे मासद्वयावधिकरणं नाम द्वाविंशः सर्गः

---

## त्रयोविंशः सर्गः

### राक्षसीप्ररोचनम्

इत्युक्त्वा मैथिलीं राजा रावणः शत्रुरावणः । संदिश्य च ततः सर्वा राक्षसीर्निर्जगाम ह ॥ १
निष्क्रान्ते राक्षसेन्द्रे तु पुनरन्तःपुरं गते । राक्षस्यो भीमरूपास्ताः सीतां समभिदुद्रुवुः ॥ २
ततः सीतामुपागम्य राक्षस्यः क्रोधमूर्छिताः । [1]परं परुषया वाचा वैदेहीमिदमब्रुवन् ॥ ३
पौलस्त्यस्य वरिष्ठस्य रावणस्य महात्मनः । दशग्रीवस्य भार्यात्वं सीते न बहुमन्यसे ॥ ४
ततस्त्वेकजटा नाम राक्षसी वाक्यमब्रवीत् । आमन्त्र्य क्रोधताम्राक्षी सीतां करतलोदरीम् ॥ ५
प्रजापतीनां षण्णां तु चतुर्थो यः प्रजापतिः । मानसो ब्रह्मणः पुत्रः पुलस्त्य इति विश्रुतः ॥ ६
पुलस्त्यस्य तु तेजस्वी महर्षिर्मानसः सुतः । नाम्ना स विश्रवा नाम प्रजापतिसमप्रभः ॥ ७
तस्य पुत्रो विशालाक्षि रावणः शत्रुरावणः । तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि ॥ ८
मयोक्तं चारुसर्वाङ्गि वाक्यं किं नानुमन्यसे । ततो हरिजटा नाम राक्षसी वाक्यमब्रवीत् ॥ ९
विवर्त्य नयने कोपान्मार्जारसदृशेक्षणा । येन देवास्त्रयस्त्रिंशद्देवराजश्च निर्जिताः ॥ १०
तस्य त्वं राक्षसेन्द्रस्य भार्या भवितुमर्हसि । ततस्तु प्रघसा नाम राक्षसी क्रोधमूर्छिता ॥ ११
भर्त्सयन्ती [2]तदा घोरमिदं वचनमब्रवीत्[3] । वीर्योत्सिक्तस्य शूरस्य संग्रामेष्वनिवर्तिनः ॥ १२

---

1. परमिति । ततः परमिति योजितं तिलके । मूर्छाक्रियाविशेषणमपि योजयितुं शक्यमेतत् ।
२. महाघोरम् क.
३. ततास्त्वित्यादि अब्रवीदित्यन्तम् घ. पुना. नास्ति ।
१. अकामामित्यादि शोभनेत्यन्तं ख. नास्ति ।

यदा ते स्मार्यते कीर्तिस्तदा ते वर्धते बलम् । ततः स हृततेजौजा महर्षिवचनौजसा ॥ ३६
एषोऽश्रमाणि तान्येव मृदुभावं गतोऽचरत् । अथर्क्षरजसो नाम वालिसुग्रीवयोः पिता ॥ ३७
सर्ववानरराजासीत्तेजसा भास्करप्रभः[१] । स च राज्यं चिरं कृत्वा वानराणां हरीश्वरः ॥ ३८
स च ऋक्षरजा नाम कालधर्मेण सङ्गतः । तस्मिन्नस्तमिते चाथ मन्त्रिभिर्मन्त्रकोविदैः ॥ ३९
पित्र्ये पदे कृतो वाली सुग्रीवो वालिनः पदे । सुग्रीवेण समं त्वस्य अद्वैधं छिद्रवर्जितम् ॥ ४०
आबाल्यं सख्यमभवदनिलस्याग्निना यथा । एष शापवशादेव न वेद बलमात्मनः ॥ ४१
वालिसुग्रीवयोर्वैरं यदा राम समुत्थितम् । [1]न ह्येष राम सुग्रीवो भ्राम्यमाणोऽपि वालिना ॥ ४२
देव जानाति न ह्येष बलमात्मनि मारुतिः । ऋषिशापाहृतबलस्तदैष कपिसत्तमः ॥ ४३
सिंहः पञ्जररुद्धो वा आस्थितः सहितो रणे ॥

पराक्रमोत्साहमतिप्रतापसौशील्यमाधुर्यनयानयैश्च ।
गाम्भीर्यचातुर्यसुवीर्यधैर्यैर्हनूमतः कोऽभ्यधिकोऽस्ति लोके ॥ ४४

असौ पुनर्व्याकरणं ग्रहीष्यन् सूर्योन्मुखः पृष्ठगमः कपीन्द्रः ।
उद्यद्गिरेरस्तगिरिं जगाम ग्रन्थं महद्धारयन[2]प्रमेयः ॥ ४५

ससूत्रवृत्त्यर्थपदं महार्थं ससङ्ग्रहं [२]साध्यति वै कपीन्द्रः ।
न ह्यस्य कश्चित् सदृशोऽस्ति शास्त्रे वैशारदे छन्दगतौ तथैव ॥ ४६

सर्वासु विद्यासु तपोविधाने प्रस्पर्धते यो हि गुरुं सुराणाम् ।
सोऽयं नवव्याकरणार्थवेत्ता ब्रह्मा भविष्यत्यपि ते प्रसादात् ॥ ४७

प्रवीविविक्षोरिव सागरस्य लोकान् दिधक्षोरिव पावकस्य ।
[३]युगक्षये ह्येव यथान्तकस्य हनूमतः स्थास्यति कः पुरस्तात्[४] ॥ ४८

एषेव चान्ये च महाकपीन्द्राः सुग्रीवमैन्दद्विविदाः सनीलाः ।
सतारतारेयनलाः सरम्भास्त्वत्कारणाद्राम सुरैर्हि सृष्टाः[५] ॥ ४९

तदेतत् कथितं सर्वं यन्मां त्वं परिपृच्छसि । हनूमतो बालभावे कर्मैतत् कथितं मया ॥ ५०
श्रुत्वागस्त्यस्य कथितं रामः सौमित्रिरेव च । विस्मयं परमं जग्मुर्वानरा राक्षसैः सह ॥ ५१

---

1. न ह्येष इति । जानातीत्यनुकृष्यते । एष सुग्रीवो मारुतेर्बलं न जानाति । मारुतिश्चात्मनो बलं न जानातीत्यर्थः ॥

2. धारयन् अप्रमेयः इति साधु ।

१. इव भास्करः ति.

२. सिद्ध्यति ति.

३. लोकक्षयेष्वेव ति.

४. सोऽयमित्यादि पुरस्तादित्यन्तम् घ. नास्ति ।

५. अस्यानन्तरम्—गजो गवाक्षो गवयः सुदंष्ट्रो मैन्दः प्रभो ज्योतिमुखो नलश्च । एते च ऋक्षाः सह वानरेन्द्रैस्त्वत्कारणाद्राम सुरैर्विसृष्टाः ॥ इति घ. पुना. अधिकम् ।

एतदनन्तरम्—महीं गता देवगणाः समस्ता महाबला रावणनाशहेतोः । एतत्तु मत्तो विदितं तवास्तु प्लवङ्गमानां धरणीनिवासः ॥—इति पद्यमपि च. प्रक्षिप्तं दृश्यते ।

अगस्त्यस्त्वब्रवीद्रामं सर्वमेतच्छ्रुतं त्वया । दृष्टः सम्भाषितश्चासि राम गच्छामहे वयम् ॥ ५२
श्रुत्वैतद्राघवो वाक्यमगस्त्यस्योग्रतेजसः । प्राञ्जलिः प्रणतश्चापि महर्षिमिदमब्रवीत् ॥ ५३
अद्य मे देवता हृष्टाः पितरः प्रपितामहाः । युष्माकं दर्शनादेव नित्यं तुष्टाः सबान्धवाः ॥ ५४
विज्ञाप्यं तु ममैतद्धि तद्वदाम्यागतस्पृहः । तद्भवद्भिर्मम कृते कर्तव्यमनुकम्पया ॥ ५५
पौरजानपदान् स्थाप्य स्वकार्येष्वहमागतः । क्रतूनेव करिष्यामि प्रभावाद्भवतां सताम् ॥ ५६
सदस्या मम यज्ञेषु भवन्तो नित्यमेव तत् । भविष्यथ महावीर्या ममानुग्रहकाङ्क्षिणः ॥ ५७
अहं युष्मान् समाश्रित्य तपोनिर्धूतकल्मषान् । अनुग्रहीतः पितृभिर्भविष्यामि सुनिर्वृतः ॥ ५८
तदागन्तव्यमनिशं भवद्भिरिह सङ्गतैः । अगस्त्याद्यास्तु तच्छ्रुत्वा ऋषयः संशितव्रताः ॥ ५९
एवमस्त्विति तं चोक्त्वा प्रयातुमुपचक्रमुः । एवमुक्त्वा गताः सर्वे ऋषयस्ते यथागतम्[1] ॥ ६०
राघवश्च तमेवार्थं चिन्तयामास विस्मितः । ततोऽस्तं भास्करे याते विसृज्य नृपवानरान् ॥ ६१
सन्ध्यामुपास्य विधिवत्तदा नरवरोत्तमः । प्रवृत्तायां रजन्यां तु सोऽन्तःपुरचरोऽभवत् ॥ ६२

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे हनूमद्वरप्राप्त्यादि नाम षट्त्रिंशः सर्गः

---

## सप्तत्रिंशः सर्गः

### पौरोपस्थानम्

अभिषिक्ते तु काकुत्स्थे धर्मेण विदितात्मनि । व्यतीता या निशा पूर्वा पौराणां हर्षवर्धनी ॥ १
तस्यां रजन्यां व्युष्टायां प्रातर्नृपतिबोधकाः । वन्दिनः समुपातिष्ठन् सौम्या नृपतिवेश्मनि ॥ २
ते रक्तकण्ठिनः सर्वे किन्नरा इव शिक्षिताः । तुष्टुवुर्नृपतिं वीरं यथावत् सम्प्रहर्षिणः ॥ ३
वीर सौम्य प्रबुध्यस्व कौसल्याप्रीतिवर्धन । जगद्धि सर्वं स्वपिति त्वयि सुप्ते नराधिप ॥ ४
विक्रमस्ते यथा विष्णो रूपं चैवाश्विनोरिव । बुद्ध्या बृहस्पतेस्तुल्यः प्रजापतिसमो ह्यसि ॥ ५
क्षमा ते पृथिवीतुल्या तेजसा भास्करोपमः । वेगस्ते वायुना तुल्यो गाम्भीर्यमुदधेरिव ॥ ६
अप्रकम्प्यो यथा स्थाणुश्चन्द्रे सौम्यत्वमीदृशम् । नेदृशाः पार्थिवाः पूर्वं भवितारो नराधिप ॥ ७
यथा त्वमतिदुर्धर्षो धर्मनित्यः प्रजाहितः । न त्वां जहाति कीर्तिश्च लक्ष्मीश्च पुरुषर्षभ ॥ ८
श्रीश्च धर्मश्च काकुत्स्थ त्वयि नित्यं प्रतिष्ठितौ । एताश्चान्याश्च मधुरा वन्दिभिः परिकीर्तिताः ॥ ९
सूताश्च संस्तवैर्दिव्यैर्बोधयन्ति स्म राघवम् । स्तुतिभिः स्तूयमानाभिः प्रत्यबुध्यत राघवः ॥ १०
स तद्विहाय शयनं पाण्डराच्छादनास्तृतम् । उत्तस्थौ नागशयनाद्धरिर्नारायणो यथा ॥ ११
समुत्थितं महात्मानं प्रह्वाः प्राञ्जलयो नराः । सलिलं भाजनैः शुभ्रैरुपतस्थुः सहस्रशः ॥ १२
कृतोदकः शुचिर्भूत्वा काले हुतहुताशनः । देवागारं जगामाशु पुण्यमिक्ष्वाकुसेवितम् ॥ १३

---

१. अस्यानन्तरम्—अभिवाद्य महात्मानो राघवेण विसर्जिताः—इति च. दृश्यते ।

तत्र देवान् पितॄन् विप्रानर्चयित्वा यथाविधि । बाह्यकक्ष्यान्तरं रामो निर्जगाम जनैर्वृतः ॥ १४
उपतस्थुर्महात्मानो मन्त्रिणः सपुरोहिताः । वसिष्ठप्रमुखाः सर्वे दीप्यमाना इवाग्नयः ॥ १५
क्षत्रियाश्च महात्मानो नानाजनपदेश्वराः । रामस्योपाविशन् पार्श्वे शक्रस्येव यथामराः ॥ १६
भरतो लक्ष्मणश्चात्र शत्रुघ्नश्च महायशाः । उपासांचक्रिरे हृष्टा वेदास्त्रय इवाध्वरम् ॥ १७
याताः प्राञ्जलयो भूत्वा किंकरा मुदिताननाः । मुदिता नाम पार्श्वस्था बहवः समुपाविशन् ॥ १८
वानराश्च महावीर्या विंशतिः कामरूपिणः । सुग्रीवप्रमुखा राममुपासन्ते महौजसः[1] ॥ १९
विभीषणश्च रक्षोभिश्चतुर्भिः परिवारितः । उपासते महात्मानं धनेशमिव गुह्यकाः ॥ २०
तथा निगमवृद्धाश्च कुलीना ये च मानवाः । शिरसावन्द्य राजानमुपासन्ते विचक्षणाः ॥ २१
तथा परिवृतो राजा श्रीमद्भिर्ऋषिभिर्वृतः । राजभिश्च महावीर्यैर्वानरैश्च सराक्षसैः ॥ २२
यथा देवेश्वरो नित्यमृषिभिः समुपास्यते । अधिकस्तेन रूपेण सहस्राक्षाद्विरोचते ॥ २३
तेषां समुपविष्टानां तास्ताः सुमधुराः कथाः । कथ्यन्ते धर्मसंयुक्ताः पुराणज्ञैर्महात्मभिः ॥ २४

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे पौरोपस्थानं नाम सप्तत्रिंशः सर्गः

———

## प्रक्षिप्तेषु षष्ठः सर्गः

### वालिसुग्रीवोत्पत्तिः

एतच्छ्रुत्वा तु निखिलं राघवोऽगस्त्यमब्रवीत् ।
य एषर्क्षरजा नाम वालिसुग्रीवयोः पिता ॥ १

जननी का च भगवन्न त्वया परिकीर्तिता ।
वालिसुग्रीवयोर्ब्रह्मन् माता मे नामतः कुतः[2] ॥

एतद्ब्रह्मन् समाचक्ष्व कौतूहलमिदं हि नः ।
स प्रोक्तो राघवेणैवमगस्त्यो वाक्यमब्रवीत् ॥ ३

शृणु राम कथामेतां यथापूर्वं समासतः ।
नारदः कथयामास ममाश्रममुपागतः ॥ ४

कदाचिदटमानोऽसावतिथित्वमुपागतः ।
अर्चितस्तु यथान्यायं विधिदृष्टेन कर्मणा ॥ ५

सुखासीनः कथां त्वेनां मया पृष्टः स कौतुकात् ।
कथयामास धर्मात्मा महर्षे श्रूयतामिति ॥ ६

मेरुर्नगवरः श्रीमाञ्जाम्बूनदमयः शुभः ।
तस्य यन्मध्यमं शृङ्गं सर्वदैवतपूजितम् ॥ ७

तस्मिन् दिव्या सभा रम्या ब्राह्मी या शतयोजना ।
तस्यामास्ते सदा देवः पद्मयोनिश्चतुर्मुखः ॥ ८

योगमभ्यस्यतस्तस्य नेत्राभ्यां यद्रसोऽस्रवत् ।
तद्गृहीतं भगवता पाणिना चर्चितं तु तत् ॥ ९

निक्षिप्तमात्रं तद्भूमौ ब्रह्मणा लोककर्तृणा ।
तस्मिन्नश्रुकणे राम वानरः सम्बभूव ह ॥ १०

उत्पन्नमात्रस्तु तदा वानरश्च नरोत्तम ।
समाश्वास्य प्रियैर्वाक्यैरुक्तः किल महात्मना ॥ ११

---

१. अस्यानन्तरम्—सुग्रीवश्चाङ्गदश्चैव हनूमाञ्जाम्बवान्नलः । सुषेणस्तारनीलौ च मैन्दश्च द्विविदो गजः ॥
कुमुदः शरभश्चैव तेवालिर्गन्धमादनः । गवाक्षो गवयो धूम्रो रम्भज्योतिर्मुखौ च ते ॥
इति ग. घ. दृश्यते । २. वालिसुग्रीवयोश्चैव नामना केन हेतुना । पुना.

पश्य शैलं सुविस्तीर्णं सुरैरध्युषितं सदा ।
तस्मिन् रम्ये गिरिवरे बहुमूलफलाशनः ॥ १२

ममान्तिकचरो नित्यं भव वानरपुङ्गव ।
कञ्चित् कालमिहास्स्व त्वं तव श्रेयो भविष्यति ॥

एवमुक्तः स चैतेन ब्रह्मणा वानरोत्तमः ।
प्रणम्य शिरसा पादौ देवदेवस्य राघव ॥ १४

उक्तवाँल्लोककर्तारमादिदेवं जगद्गुरुम् ।
यथाज्ञापयसे देव स्थितोऽहं तव शासने ॥ १५

एवमुक्त्वा हरिर्देवं ययौ हृष्टमनास्तदा ।
स तदा द्रुमषण्डेषु फलपुष्पघनेषु च ॥ १६

ब्रह्मप्रतिबलः शैघ्र्ये वने बलकृताशनः ।
कञ्चिन्मधूनि मुख्यानि चिन्वन् पुष्पाण्यनेकशः ॥

दिने दिने च सायाह्ने ब्रह्मणोऽन्तिकमागमत् ।
गृहीत्वा राम मुख्यानि पुष्पाणि च फलानि च ॥

ब्रह्मणो देवदेवस्य पादमूले न्यवेदयत् ।
एवं तस्य गतः कालो बहु पर्यटतो गिरिम् ॥१९

कस्यचित्त्वथ कालस्य समतीतस्य राघव ।
ऋक्षराड्वानरश्रेष्ठस्तृष्णया परिपीडितः ॥ २०

उत्तरं मेरुशिखरं गतस्तत्र च दृष्टवान् ।
नानाविहङ्गसङ्घुष्टं प्रसन्नसलिलं सरः ॥ २१

चलत्केसरमात्मानं कृत्वा तस्य तटे स्थितः ।
ददर्श तस्मिन् सरसि वक्त्रच्छायामथात्मनः ॥

कोऽयमस्मिन् मम रिपुर्वसत्यन्तर्जले महान् ।
रूपं चान्तर्गतं तत्र वीक्ष्य तत्पाथसो हरिः ॥२३

क्रोधाविष्टमना ह्येष नियतं मावमन्यते ।
तदस्य दुष्टभावस्य कर्तव्यो निग्रहो मया ॥ २४

एवं सञ्चिन्त्य मनसा स वै वानरचापलात् ।
आप्लुत्य चापतत्तस्मिन् ह्रदे वानरसत्तमः ॥२५

उत्प्लुत्य तस्मात् सरस उत्थितः प्लवगः पुनः ।
तस्मिन्नेव क्षणे राम स्त्रीत्वं प्राप स वानरः ॥२६

मनोज्ञरूपा सा नारी लावण्यललिता शुभा ।
विस्तीर्णजघना सुभ्रूर्नीलकुञ्चितमूर्धजा ॥ २७

मुग्धा सस्मितवक्त्रा च पीनस्तनतटा शुभा ।
ह्रदतीरस्थिता भाति ऋजुयष्टिर्लता यथा ॥ २८

त्रैलोक्यसुन्दरी कान्ता सर्वचित्तप्रमाथिनी ।
लक्ष्मीव पद्मरहिता चन्द्रज्योत्स्नेव निर्मला॥२९

रूपेणाप्यभवत् सा तु श्रीर्गौर्देवी उमा यथा ।
द्योतयन्तो दिशः सर्वास्तत्राभूत् सा वराङ्गना ॥

एतस्मिन्नन्तरे देवो निवृत्तः सुरनायकः ।
पादावुपास्य देवस्य ब्रह्मणस्तेन वै प्रथा ॥ ३१

तस्यामेव च वेलायामादित्योऽपि परिभ्रमन् ।
तस्मिन्नेव वने सोऽभूद्यस्मिन् सा तनुमध्यमा ॥

युगपत् सा तदा दृष्टा देवाभ्यां सुरसुन्दरी ।
कन्दर्पवशगौ तौ तु दृष्ट्वा तां सम्बभूवतुः॥३३

ततः क्षुभितसर्वाङ्गौ सुरेन्द्रतपनावुभौ ।
तद्रूपमद्भुतं दृष्ट्वा त्यजितौ धैर्यमात्मनः ॥ ३४

ततस्तस्यां सुरेन्द्रेण स्कन्नं शिरसि पातितम् ।
अनासाद्यैव तां नारीं संनिवृत्तमथोऽभवत् ॥ ३५

ततः सा वानरपतिं प्रासूत बलशालिनम् ।
अमोघरेतस्त्वात्तस्य वासवस्य महात्मनः ॥ ३६

वालेषु पतितं बीजं वाली नाम बभूव ह ।
भास्करेणापि तस्यां वै कन्दर्पवशवर्तिना ॥ ३७

बीजं तु सिक्तं ग्रीवायां विधानमनुवर्तिना ।
तेनापि सा वरतनुर्नोक्ता किञ्चिद्वचः शुभम् ॥

निवृत्तमदनश्चात्र सूर्योऽपि समपद्यत ।
ग्रीवायां पतिते बीजे सुग्रीवः समजायत ॥ ३९

एवमुत्पाद्य तौ वीरौ वानरेन्द्रौ महाबलौ ।
दत्त्वा तु काञ्चनीं मालां वानरेन्द्रस्य वालिनः ॥

अक्षय्यां गुणसम्पूर्णां शक्रस्तु त्रिदिवं ययौ ।
सूर्योऽपि स्वसुतस्यैनं निरूप्य पवनात्मजम् ॥

कृत्येषु व्यवसायेषु जगाम सवितांम्बरम् ।
तस्यां निशायां व्युष्टायामुदिते च दिवाकरे॥४२

स तु वानररूपं तु प्रतिपेदे पुनर्नृप ।
स एव वानरो भूत्वा पुत्रौ स्वस्य प्लवङ्गमौ ॥४३

पिङ्गेक्षणौ हरिवरावपश्यत् कामरूपिणौ ।
मधून्यमृतकल्पानि पायितौ तेन तौ तदा ॥ ४४

गृह्य ऋक्षरजास्तौ तु ब्रह्मणोऽन्तिकमागतः ।
दृष्ट्वर्क्षरजसं पुत्रं ब्रह्मा लोकपितामहः ॥ ४५

बहुशः सान्त्वयामास पुत्राभ्यां सहितं हरिम् ।
सान्त्वयित्वा ततः पश्चाद्देवदूतमथादिशत् ॥ ४६

गच्छ मद्वचनाद्दूत किष्किन्धां नाम वै शुभाम् ।
सा ह्यस्य गुणसम्पन्ना महती च पुरी शुभा ॥४७

तत्र वानरयूथानि बहूनि निवसन्ति च ।
बहुरत्नसमाकीर्णा वानरैः कामरूपिभिः ॥ ४८

पण्यापणवती दुर्गा चातुर्वर्ण्ययुता सदा ।
विश्वकर्मकृता दिव्या मन्नियोगाच्च शोभना ॥४९

तत्रर्क्षरजसं पुत्रं सपुत्रं वानरर्षभम् ।
यूथपालान् समाहूय यांश्चान्यान् प्राकृतान् हरीन्

तेषां सम्भाष्य सर्वेषां मदीयं जनसंसदि ।
अभिषेचय राजानमारोप्य महदासनम् ॥ ५१

दृष्टमात्राश्च ते सर्वे वानरेण च धीमता ।
अस्यर्क्षरजसो नित्यं भविष्यन्ति वशानुगाः॥५२

इत्येवमुक्ते वचने ब्रह्मणा तु हरीश्वरम् ।
पुरतःकृत्य दूतोऽसौ प्रययौ तां पुरीं शुभाम् ॥

स प्रविश्यानिलगतिस्तां गुहां वानरोत्तमम् ।
स्थापयामास राजानं पितामहनियोगतः ॥ ५४

राज्याभिषेकविधिना स्नातोऽथाभ्यर्चितस्तदा ।
स बद्धमकुटः श्रीमानभिषिक्तः स्वलङ्कृतः ॥५५

आज्ञापयामास हरीन् सर्वान् मुदितमानसः ।
सप्तद्वीपसमुद्रायां पृथिव्यां ये प्लवङ्गमाः ॥ ५६

वालिसुग्रीवयोरेव ह्येष त्वृक्षरजाः पिता ।
जननी चैव तु हरिरित्येतद्भद्रमस्तु ते ॥ ५७

यश्चैतच्छ्रावयेद्विद्वान् यश्चैतच्छृणुयान्नरः ।
सिध्यन्ति तस्य कार्यार्था मनसो हर्षवर्धनाः॥५८

एतच्च सर्वं कथितं मया विभो
प्रविस्तरेणेह यथार्थतस्तव ।
उत्पत्तिरेषा रजनीचराणा-
मुक्ता तथैवेह हरीश्वराणाम् ॥ ५९

इति प्रक्षिप्तेषु वालिसुग्रीवोत्पत्तिर्नाम षष्ठः सर्गः

———

## प्रक्षिप्तेषु सप्तमः सर्गः

### नारायणहतगतिकथनम्

एतां श्रुत्वा कथां दिव्यां पौराणीं राघवस्ततः ।
भ्रातृभिः सहितो वीरो विस्मयं परमं ययौ ॥ १

राघवोऽथ ऋषेर्वाक्यं श्रुत्वा वचनमब्रवीत् ।
कथेयं महती पुण्या त्वत्प्रसादाच्छ्रुता मया ॥ २

बृहत्कौतूहलेनास्मि संवृतो मुनिपुङ्गव ।
उत्पत्तिर्यादृशी दिव्या वालिसुग्रीवयोर्द्विज ॥ ३

ब्रह्मर्षे मम किं चित्रं सुरेन्द्रतपनावुभौ ।
जातौ वानरशार्दूलौ बलेन बलिनां वरौ ॥ ४

एवमुक्ते तु रामेण कुम्भयोनिरभाषत ।
एवमेतन्महाबाहो वृत्तमासीत् पुरा किल ॥ ५

अथापरां कथां दिव्यां शृणु राजन् सनातनीम् ।
यदर्थं राम वैदेही रावणेन पुरा हृता ॥ ६

तत्तेऽहं कीर्तयिष्यामि समाधिं श्रवणे कुरु ।
पुरा कृतयुगे राम प्रजापतिसुतं प्रभुम् ॥ ७

सनत्कुमारमासीनं रावणो राक्षसाधिपः ।
ददर्श सूर्यसङ्काशं ज्वलन्तमिव तेजसा ॥ ८

विनयावनतो भूत्वा ह्यभिवाद्य कृताञ्जलिः ।
उक्तवान् रावणो राम तमृषिं सत्यवादिनम् ॥

को ह्यस्मिन् प्रवरो लोके देवानां बलवत्तरः ।
यं समाश्रित्य विबुधा जयन्ति समरे रिपून् ॥
कं यजन्ति द्विजा[1] नित्यं कं ध्यायन्ति च योगिनः ।
एतन्मे शंस भगवन् विस्तरेण तपोधन ॥ ११

विदित्वा हृद्गतं तस्य ध्यानदृष्टिर्महायशाः ।
उवाच रावणं प्रेम्णा श्रूयतामिति पुत्रक ॥ १२
यो बिभर्ति जगत् कृत्स्नं यस्योत्पत्तिं न विद्महे ।
सुरासुरैर्नतो नित्यं हरिर्नारायणः प्रभुः ॥ १३
यस्य नाभ्युद्भवो ब्रह्मा विश्वस्य जगतः पतिः ।
येन सर्वमिदं सृष्टं विश्वं स्थावरजङ्गमम् ॥ १४
तं समाश्रित्य विबुधा विधिना हरिमध्वरे ।
पिबन्ति ह्यमृतं चैव मानवाश्च यजन्ति तम् ॥
पुराणैश्चैव वेदैश्च पाञ्चरात्रैस्तथैव च ।
ध्यायन्ति योगिनो नित्यं क्रतुभिश्च यजन्ति तम् ॥
दैत्यदानवरक्षांसि ये चान्ये चामरद्विषः ।
सर्वाञ्जयति सङ्ग्रामे सदा सर्वैः स पूज्यते ॥ १७
श्रुत्वा महर्षेस्तद्वाक्यं रावणो राक्षसाधिपः ।
उवाच प्रणतो भूत्वा पुनरेव महामुनिम् ॥ १८
दैत्यदानवरक्षांसि ये हताः समरेऽरयः ।
कां गतिं प्रतिपद्यन्ते के च ते हरिणा हताः ॥ १९
रावणस्य वचः श्रुत्वा प्रत्युवाच महामुनिः ।
दैवतैर्निहता नित्यं प्राप्नुवन्ति दिवः स्थलम् ॥२०
पुनस्तस्मात् परिभ्रष्टा जायन्ते वसुधातले ।
पूर्वार्जितैः सुखैर्दुःखैर्जायन्ते च म्रियन्ति च ॥

ये ये हताश्चक्रधरेण राजं-
स्त्रिलोकनाथेन जनार्दनेन ।
ते ते गतास्तत्र लयं नरेन्द्राः
क्रोधोऽपि देवस्य वरेण तुल्यः ॥ २२

श्रुत्वा ततस्तद्वचनं निशाचरः
सनत्कुमारस्य मुखाद्विनिर्गतम् ।
तथा प्रहृष्टः स बभूव विस्मितः
कथं तु यास्यामि हरिं महाहवे ॥ २३

इति प्रक्षिप्तेषु नारायणहतगतिकथनं नाम
सप्तमः सर्गः

---

## प्रक्षिप्तेषु अष्टमः सर्गः

### रामावतारकथनम्

एवं चिन्तयतस्तस्य रावणस्य दुरात्मनः ।
पुनरेवापरं वाक्यं व्याजहार महामुनिः ॥ १
मनसश्चेप्सितं यत्ते भविष्यति महाहवे ।
सुखी भव महाबाहो कञ्चित् कालमुदीक्षय ॥ २
एवं श्रुत्वा महाबाहुस्तमृषिं प्रत्युवाच सः ।
कीदृशं लक्षणं तस्य ब्रूहि सर्वमशेषतः ॥ ३
राक्षसस्य वचः श्रुत्वा स मुनिः प्रत्यभाषत ।
श्रूयतां सर्वमाख्यास्ये तव राक्षसपुङ्गव ॥ ४
स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः ।
तेन सर्वमिदं प्रोतं त्रैलोक्यं सचराचरम् ॥ ५
स भूमौ दिवि पाताले पर्वतेषु वनेषु च ।
स्थावरेषु च सर्वेषु वनेषु नगरीषु च ॥ ६
ओंकारश्चैव सत्यं च सावित्री पृथिवी च सः ।
धराधरधरो देवो ह्यनन्त इति विश्रुतः ॥ ७

अहश्च रात्रिश्च उभे च सन्ध्ये
दिवाकरश्चैव यमश्च सोमः ।
स एव कालो ह्यनलश्च वायुः
स ब्रह्मरुद्रौ च स एव बालः ॥ ८

विद्योतति ज्वलति भाति च पाति लोकान्
सृजत्ययं संहरति प्रशास्ति ।
क्रीडां करोत्यव्ययलोकनाथो
विष्णुः पुराणो भवनाशहेतुः ॥ ९

अथवा बहुनानेन किमुक्तेन दशानन ।
तेन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥ १०

---

१. जनाः च.

नीलोत्पलदलश्यामः किञ्जल्कारुणवल्कलः ।
प्रावृट्काले यथा व्योम्नि सतडित्तोयदस्तथा ॥

श्रीमान् मेघवपुः श्यामः पङ्कजारुणलोचनः ।
श्रीवत्सेनोरसा युक्तः शशाङ्ककृतलक्षणः ॥ १२

तस्य नित्यं शरीरस्था मेघस्येव शतह्रदा ।
सङ्ग्रामरूपिणी लक्ष्मीर्देहमावृत्य तिष्ठति ॥ १३

न स शक्यः सुरैर्द्रष्टुं नासुरैर्न च पन्नगैः ।
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ १४

न हि यज्ञफलैस्तात न तपोभिस्तु सञ्चितैः ।
शक्यते भगवान् द्रष्टुं न दानेन न चेज्यया ॥

तद्भक्तैस्तद्गतप्राणैस्तच्चित्तैस्तत्परायणैः ।
शक्यते भगवान् द्रष्टुं ज्ञाननिर्दग्धकिल्बिषैः ॥

अथवा राक्षसेन्द्र त्वं यदि तं द्रष्टुमिच्छसि ।
कथयिष्यामि ते सर्वं श्रूयतां यदि रोचते ॥ १७

कृते युगे व्यतीते वै मुखे त्रेतायुगस्य तु ।
हितार्थं देवमर्त्यानां भविता नृपविग्रहः ॥ १८

इक्ष्वाकूणां च यो राजा भाव्यो दशरथो भुवि ।
तस्य सूनुर्महातेजा रामो नाम भविष्यति ॥ १९

महातेजा महाबुद्धिर्महाबलपराक्रमः ।
महाबाहुर्महासत्त्वः क्षमया पृथिवीसमः ॥ २०

आदित्य इव दुष्प्रेक्ष्यः समरे शत्रुभिः सदा ।
भविता हि तदा रामो नरो नारायणः प्रभुः ॥

पितुर्नियोगात् स विभुर्दण्डके विविधे वने ।
विचरिष्यति धर्मात्मा सह भ्रात्रा महात्मना ॥

तस्य पत्नी महाभागा लक्ष्मीः सीतेति विश्रुता ।
दुहिता जनकस्यैषा उत्थिता वसुधातलात् ॥ २३

रूपेणाप्रतिमा लोके सर्वलक्षणलक्षिता ।
छायेवानुगता रामं निशाकरमिव प्रभा ॥ २४

शीलाचारगुणोपेता साध्वी धैर्यसमन्विता ।
सहस्रांशो रश्मिरिव ह्येकमूर्तिरिव स्थिता ॥ २५

एवं ते सर्वमाख्यातं मया रावण विस्तरात् ।
महतो देवदेवस्य शाश्वतस्याव्ययस्य च ॥ २६

एवं श्रुत्वा महाबाहू राक्षसेन्द्रः प्रतापवान् ।
त्वया सह विरोधेच्छुश्चिन्तयामास राघव ॥ २७

वाक्यं सनत्कुमारस्य चिन्तयानो मुहुर्मुहुः ।
रावणो मुमुदे श्रीमान् युद्धार्थी विचचार ह ॥

श्रुत्वा च तौ कथां रामो विस्मयोत्फुल्ललोचनः ।
शिरसश्चालनं कृत्वा तमर्थं परिचिन्तयन् ॥ २९

श्रुत्वा तु वाक्यं च नरेश्वरस्तदा
मुदा युतो विस्मयमानचक्षुः ।
पुनश्च तं ज्ञानवतां प्रधान-
मुवाच वाक्यं वद मे पुरातनम् ॥ ३०

इति प्रक्षिप्तेषु रामावतारकथनं नाम
अष्टमः सर्गः

---

## प्रक्षिप्तेषु नवमः सर्गः

### सीतारामकथाश्रवणफलम्

ततः पुनर्महातेजाः कुम्भयोनिर्महायशाः ।
उवाच रामं प्रणतं पितामह इवेश्वरम् ॥ १

श्रूयतामिति चामन्त्र्य रामं सत्यपराक्रमम् ।
कथाशेषं महातेजाः कथयामास स प्रभुः ॥ २

यथाख्यानं श्रुतं चैव यथावृत्तं च तत्तथा ।
प्रीतात्मा कथयामास राघवाय महामतिः ॥ ३

एतदर्थं महाबाहो रावणेन दुरात्मना ।
सुता जनकराजस्य हृता राम महामते ॥ ४

एतां कथां महाबाहो नारदः सुमहायशाः ।
कथयामास मह्यं वै मेरौ गिरिवरोत्तमे ॥ ५

देवगन्धर्वसिद्धानामृषीणां च महात्मनाम् ।
कथाशेषं पुनः सोऽथ कथयामास राघव ॥ ६

नारदः सुमहातेजाः प्रहसन्निव मानद ।
तां कथां शृणु राजेन्द्र महापापप्रणाशिनीम् ॥ ७

यां तु श्रुत्वा महाबाहो ऋषयो दैवतैः सह ।
ऊचुस्तं नारदं सर्वे हर्षपर्याकुलेक्षणाः ॥ ८

यश्चेमां श्रावयेन्नित्यं शृणुयाद्वापि भक्तितः ।
स पुत्रपौत्रवान् राम स्वर्गलोके महीयते ॥ ९

इति प्रक्षिप्तेषु सीतारामकथाश्रवणफलं नाम
नवमः सर्गः

---

## प्रक्षिप्तेषु दशमः सर्गः

### श्वेतद्वीपवासप्राप्त्युपायकथनम्

ततः स रावणो राम पर्यटन् पृथिवीतलम् ।
विजयार्थी महाशूरैः राक्षसैः परिवारितः ॥ १

दैत्यदानवरक्षःसु यं शृणोति बलाधिकम् ।
तमाह्वयति युद्धार्थी रावणो बलदर्पितः ॥ २

एवं स पर्यटन् सर्वां पृथिवीं पृथिवीपते ।
ब्रह्मलोकान्निवृत्तं तम्[1] आससादाथ नारदम् ॥ ३

व्रजन्तं मेघपृष्ठस्थमंशुमन्तमिवापरम् ।
तं चाभिसृत्य प्रीतात्मा ह्यभिवाद्य कृताञ्जलिः ॥ ४

उवाच हृष्टमनसा रावणो नारदं तथा ।
आब्रह्मभुवनाल्लोकास्त्वया दृष्टा ह्यनेकशः ॥ ५

कस्मिँल्लोके महाभाग मानवा बलवत्तराः ।
योद्धुमिच्छामि तैः सार्धं यथाकामं यथासुखम्

तच्छ्रुत्वा नारदो वाक्यं रावणस्य दुरात्मनः ।
चिन्तयित्वा मुहूर्तं तु महात्मा प्रत्युवाच तम् ॥

अस्ति राजन् महाद्वीपं क्षीरोदस्य समीपतः ।
यत्र ते चन्द्रसङ्काशा मानवाः सुमहाबलाः ॥ ८

महाकाया महावीर्या मेघस्तनितनिःस्वनाः ।
महामात्रा धैर्यवन्तो महापरिघबाहवः ॥ ९

श्वेतद्वीपे मया दृष्टा मानवा राक्षसाधिप ।
बलवीर्यसमायुक्तान् यादृशांस्त्वमिहेच्छसि ॥ १०

नारदस्य वचः श्रुत्वा रावणः प्रत्युवाच ह ।
कथं नारद जायन्ते तस्मिन् द्वीपे महाबलाः ॥ ११

श्वेतद्वीपे कथं वासः प्राप्तस्तैः सुमहात्मभिः ।
एतन्मे सर्वमाख्याहि प्रभो नारद तत्त्वतः ॥ १२

त्वया दृष्टं जगत् सर्वं हस्तामलकवत् सदा ।
रावणस्य वचः श्रुत्वा नारदः प्रत्युवाच तम् ॥

अनन्यमानसा नित्यं नारायणपरायणाः ।
तदाराधनसक्ताश्च तच्चित्तास्तत्परायणाः ॥ १४

एकान्तभावानुगतास्ते नरा राक्षसाधिप ।
तच्चित्तास्तद्गतप्राणा नरा नारायणं श्रिताः ॥ १५

श्वेतद्वीपे तु तैर्वास आर्जितः पुण्यकर्तृभिः ।
ये हता लोकनाथेन शार्ङ्गमानम्य संयुगे ॥ १६

चक्रायुधेन देवेन तेषां वासस्त्रिविष्टपे ।
न हि यज्ञफलैस्तात न तपोभिर्न संयमैः ॥ १७

न च दानफलैर्मुख्यैः स लोकः प्राप्यते सुखम् ।
नारदस्य वचः श्रुत्वा दशग्रीवः सुविस्मितः ॥

ध्यात्वा तु सुचिरं कालं तेन योत्स्यामि संयुगे ।
आपृच्छ्य नारदं प्रायाच्छ्वेतद्वीपाय रावणः ॥

नारदोऽपि चिरं ध्यात्वा कौतूहलसमन्वितः ।
दिदृक्षुः परमाश्चर्यं तत्रैव त्वरितं ययौ ॥ २०

स हि केलिकरो विप्रो नित्यं च समरप्रियः ।
रावणोऽपि ययौ तत्र राक्षसैः सह राघव ॥ २१

महता सिंहनादेन नादयन् स दिशो दश ।
गते तु नारदे तत्र रावणोऽपि महायशाः ॥ २२

प्राप श्वेतं महाद्वीपं दुर्लभं यत् सुरैरपि ।
तेजसा तस्य द्वीपस्य रावणस्य बलीयसः ॥ २३

तत्तस्य पुष्पकं यानं वातवेगसमाहतम् ।
अवस्थातुं न शक्नोति वाताहत इवाम्बुदः ॥ २४

सचिवा राक्षसेन्द्रस्य द्वीपमासाद्य दुर्दृशम् ।
अब्रुवन् रावणं भीता राक्षसा जातसाध्वसाः ॥

---

१. ब्रह्मलोकान्निवर्तन्तम् पुना.

राक्षसेन्द्र वयं मूढा भ्रष्टसंज्ञा विचेतसः ।
अवस्थातुं न शक्ष्यामो युद्धं कर्तुं कथंचन ॥ २६

एवमुक्त्वा दुद्रुवुस्ते सर्वे एव निशाचराः ।
रावणोऽपि हि तद्यानं पुष्पकं हेमभूषितम् ॥२७

विसर्जयामास तदा सह तैः क्षणदाचरैः ।
गते तु पुष्पके राम रावणो राक्षसाधिपः ॥ २८

कृत्वा रूपं महाभीमं सर्वराक्षसवर्जितः ।
प्रविवेश तदा तस्मिञ्श्वेतद्वीपे स रावणः ॥ २९

प्रविशन्नेव तत्राशु नारीभिरुपलक्षितः ।
एकया सुस्मितं कृत्वा हस्ते गृह्य स रावणः ॥३०

पृष्टश्चागमनं ब्रूहि किमर्थमिह चागतः ।
को हि त्वं कस्य वा पुत्रः केन वा प्रहितो वद ॥

इत्युक्तो रावणो राजन् क्रुद्धो वचनमब्रवीत् ।
अहं विश्रवसः पुत्रो रावणो नाम राक्षसः ॥३२

युद्धार्थमिह सम्प्राप्तो न च पश्यामि कञ्चन ।
एवं कथयतस्तस्य रावणस्य दुरात्मनः ॥ ३३

प्राहसंस्ते ततः सर्वे सस्वनं युवतीजनाः ।
एकया क्रुद्धया तासां बलवद्गृह्य लीलया ॥ ३४

भ्रामितस्तु सखीमध्ये विक्षिप्तः स दशाननः ।
सखीमन्यां समाहूय पश्य त्वं कीटकं धृतम् ॥

दशास्यं विंशतिभुजं कृष्णाञ्जनसमप्रभम् ।
हस्ताद्धस्तं स च क्षिप्तो भ्राम्यते श्रमलालसः ॥

भ्राम्यमाणेन बलिना राक्षसेन विपश्चिता ।
पाणावेकाथ सन्दष्टा रोषेण वनिता शुभा ॥३७

मुक्तस्तयाशुभः कीटो धुन्वत्या हस्तवेदनात् ।
गृहीत्वान्या राक्षसेन्द्रमुत्पपात विहायसा ॥ ३८

ततस्तामपि सङ्क्रुद्धो विददार नखैर्भृशम् ।
तया स हि विनिर्धूतः सहसैव निशाचरः ॥ ३९

पपात चाम्भसो मध्ये सागरस्य भयातुरः ।
पर्वतस्येव शिखरं यथा वज्रविदारितम् ॥ ४०

प्रापतत् सागरस्यैव जले तस्थौ निपातितः ।
एवं स रावणो राम श्वेतद्वीपनिवासिभिः ॥ ४१

स्त्रीजनैर्विनिगृह्याशु भ्रामितश्च ततस्ततः ।
नारदोऽपि महातेजा रावणं वीक्ष्य धर्षितम् ॥

विस्मयं सुचिरं गत्वा प्रजहास ननर्त च ।
ततः स सागरजलाज्जलक्लिन्नशिरोरुहः ॥ ४३

दक्षिणं तीरमासाद्य चिन्तयामास विस्मितः ।
ये मया निर्जिता लोका न तेषु भयमीदृशम् ॥

स्वभावतोऽल्पवीर्याणां विरुद्धं योषितामिदम् ।
नूनमेतस्य लोकस्य मानवाः प्रभविष्णवः ॥ ४५

स्त्रीरूपविग्रहधरा यान् ममाचष्ट नारदः ।
बलवद्भिस्तु सन्धेयमिति सञ्चिन्त्य निश्चितम् ॥

भूयस्तासां प्रवृत्त्यर्थं तद्वनं समलोडयत् ।
अथापश्यन्महात्मानं पितामहसुतं प्रभुम् ॥ ४७

सनत्कुमारमासीनं सर्वयोगभृतां वरम् ।
जाज्वल्यमानं तपसा समिद्भिरिव पावकम् ॥४८

अपश्यद्दक्षिणे पार्श्वे विचरन्तं गुहाश्रयम् ।
स तं दृष्ट्वा तपोवृद्धमभिवाद्य कृताञ्जलिः ॥४९

व्रीडितः परिपप्रच्छ ब्रह्मर्षिं सत्यवादिनम् ।
भगवन् केन लोकोऽयं कल्पितः सुमहात्मना ॥

के वा लोके व[illegible] सन्त्यस्मि[illegible] सर्वज्ञानवतां वर ।
किं च त्वं ध्यायसे [illegible]शंस मे सुसमाधिना ॥

एतन्मे ब्रूहि तत् स[illegible] सर्वज्ञो ह्यसि विश्रुत ।
एवमुक्तो महातेजा विदित्वा तस्य हृद्गतम् ॥५२

उवाच वाक्यं प्रहसञ्श्रूयतामिति पुत्रक ।
यो हि वै सर्वमेवेदं बिभर्ति सचराचरम् ॥ ५३

त्रैलोक्यं सर्वभूतात्मा यस्योत्पत्तिं न विद्महे ।
यमाहुर्वेदविदुषः पुरुषं तमसः परम् ॥ ५४

आदित्यरूपमजरं परमात्मानमीश्वरम् ।
यस्य नाभिभवो ब्रह्मा पिता मम पितामहः ॥५५

कैलासनिलयः श्रीमान् भवश्च क्रोधसम्भवः ।
यं समाश्रित्य विबुधा विधिना हविरध्वरे ॥५६

पिबन्ति चामृतं हृष्टाः परिभूय दितेः सुतान् ।
यस्य श्वासानिलोद्धूताः श्रियस्त्वामपराजितम् ॥

गृहीत्वा सुमहावेगाश्चिक्षिपुः सागराम्भसि ।
येन दैत्या महावीर्या दानवाश्च सनैर्ऋताः ॥५८

निहता बहुरूपेण बहवो बाहुशालिना ।
तेनायं लोकनाथेन कल्पितः समहात्मना ॥ ५९

गोविन्देन निवासार्थं लोको वै सुमहात्मना ।
अर्चयन्ति जगन्नाथं नारायणपरायणाः ॥ ६०

अद्वेषाः सर्वभूतेषु महायोगबलाश्रयाः ।
यजन्ति पञ्चभिर्यज्ञैः सततं मधुसूदनम् ॥ ६१

एकान्तिनो महासत्त्वा वसन्ति सुसमाहिताः ।
यः पुराणे च वेदे च पाञ्चरात्रे च पठ्यते ॥ ६२

साङ्ख्ययोगे च मुनिभिर्ध्यायते चेज्यते च यः ।
मुनिभिर्देवसङ्घैश्च स्थाप्यते भगवान् हरिः ॥६३

मधुकैटभयोर्हन्ता कस्तमन्वेष्टुमर्हति ।
पितामहोऽपि तं देवं न च जानाति रावण ॥

यस्तु नित्यं विजानाति हरिर्नारायणं विभुम् ।
जगदाभरणं पुण्यं तस्य मोक्षो न संशयः ॥६५

एतच्छ्रुत्वा मुनेर्वाक्यं प्रसन्नेनान्तरात्मना ।
पुनरेव ततो रक्षः पप्रच्छ मुनिपुङ्गवम् ॥ ६६

कथं च दृश्यते देव कथं च श्रूयते भुवि ।
कथं च क्रीडते लोके द्रष्टुं वा शक्यते कथम् ॥

कियत्कालेन वा ब्रह्मँल्लोकोऽयं तपसा मया ।
शक्यः प्रवेष्टुं तद्ब्रूहि सर्वं हि विदितं तव ॥ ६८

आकर्ण्य सस्पृहं तस्य वाक्यं वाक्यविशारदः ।
प्रत्युवाच मुनिर्धीमांस्तत्सर्वमनुपूर्वशः ॥ ६९

स हि सर्वगतो देवः सूक्ष्मोऽव्यक्तः सनातनः ।
येन सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ॥

स भूमौ दिवि पाताले पर्वतेषु वनेषु च ।
सागरेषु च सर्वेषु वसतीह सरित्सु च ॥ ७१

अहश्च रात्रिश्च उभे च सन्ध्ये
दिवाकरश्चैव यमश्च सोमः ।
स एव कालो वरुणः स एव
स ब्रह्मरुद्रेन्द्रमुखः स चाग्निः ॥ ७२

ओंकारो भूर्भुवः स्वश्च गायत्री सन्ध्य एव च ।
धराधरधरो देवः सोऽनन्त इति विश्रुतः ॥७३

विद्योतति ज्वलति वर्षति वाति पाति
गर्जत्युपैति तपते दहते स चैव ।
लोकान् सृजत्यवति संहरते सदैव
दैत्यान् स एव दहते जगति प्रसह्य ॥

स न शक्यः सुरैर्द्रष्टुं नासुरैर्न च पन्नगैः ।
प्रसादं कुरुते यस्य स वै तं द्रष्टुमर्हति ॥ ७५

तद्गतैस्तद्गतप्राणैः शुचिभिस्तत्परायणैः ।
शक्यः प्रवेष्टुं लोकोऽयं ज्ञाननिर्धूतकिल्बिषैः ॥

एवंविधैरयं लोकः प्राप्यते पुरुषोत्तमैः ।
अकामकारिभिर्देवैरक्रोधैर्दग्धतामसैः ॥ ७७

यश्चैव सुमहाकायः प्रविष्टो लोकमव्ययम् ।
आस्ते तथैव हरिणा कृता तेन महापुरी ॥ ७८

अष्टाविंशे युगे प्राप्ते मनोरस्य विवस्वतः ।
वैष्णवीं मूर्तिमाविश्य लोकमेनं प्रवेक्ष्यति ॥७९

नातः परतरं श्रोतुं मत्तो वै राक्षसेश्वर ।
उत्तिष्ठ गच्छ भद्रं ते प्राप्स्यसे गतिमीप्सिताम् ॥

एवमुक्तस्तथेत्युक्त्वा तं प्रणम्याभिपूज्य च ।
समासाद्य महत् सैन्यं ययौ लङ्कामशङ्कितः ॥

नारदोऽपि प्रहृष्टात्मा दृष्ट्वा सर्वमशेषतः ।
द्रुतं मेरुमुपागम्य विशते तां शुभां सभाम् ॥

तस्यां ब्रह्माणमासीनमभिवाद्य कृताञ्जलिः ।
देवान् संश्रावयामास समीपे पद्मजन्मनः ॥८३

निशम्य सुमहत् पुण्यमाख्यानं पद्मसम्भवः ।
नारदं सम्परिष्वज्य प्राह भूतभविष्यवित् ॥ ८४

हिरण्यकशिपुः पूर्वं बभूवैष निशाचरः ।
अवध्यो बहुभिर्योगैर्वरदानान्महाबलः ॥ ८५

स कदाचिन्महात्मानं पद्मनाभमधोक्षजम् ।
सभायां गर्हयन् दर्पान्नृसिंहवपुषं हरिम् ॥ ८६

समुद्गृह्य नखैस्तेन दीर्यमाणस्य संयुगे ।
रक्तसंस्पर्शजं दिव्यं चक्षुर्दैत्यपतेरभूत् ॥ ८७

स तु तद्राक्षसं जन्म तस्मान्मानुषजन्मनः ।
भाविनीं निधनप्राप्तिं पश्यन् दिव्येन चक्षुषा ॥

श्रीवत्साङ्कं तदङ्कस्थः प्राह दैत्यः शनैरिदम् ।
नखैर्विभिन्नहृदयः क्षणं दीनः कृताञ्जलिः ॥ ८९

तप्तहाटककेशान्त ज्वलत्पावकलोचन ।
वज्रायुधनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥९०

कैटभारे हरे देव विष्णो विपुलविक्रम ।
त्राहि मां भूतभव्येश शरणागतवत्सल ॥ ९१

त्वद्धते राक्षसे भावे मानुषे च पदे विभो ।
प्राप्नुयां त्वन्मयो लोकं लोकनाथ प्रसीद मे॥९२

एवमुक्तस्तथेत्युक्त्वा ययौ दैत्यपतिं हरिः ।
हंसयुक्तविमानेन किङ्किणीजालमालिना ॥ ९३

स एव च पुनस्तत्र राक्षसोऽभून्महासुरः ।
राक्षसेन विधानेन सदा तद्भावभावितः ॥ ९४

मानुषत्वमुपागम्य लोकान् हन्तुं कृतोद्यमम् ।
तृतीयं च हतं तेन श्वेतद्वीपं प्रवेक्ष्यति ॥ ९५

वैष्णवं तेज आविश्य यथोक्तं ब्रह्मवादिना ।
मयापि चेहसंस्थेन दृष्टमेवाक्षदर्शनात् ॥ ९६

मयावलम्बितं सर्वं देवस्य परमात्मनः ।
यस्त्विदं पठते नित्यं पुण्यमाख्यानमादितः॥९७

नारदोक्तं मनुष्यो वै स याति परमां गतिम् ।
वैष्णवं परमाख्यानं सर्वपापप्रणाशनम् ॥ ९८

नित्यं च शृणुयाद्यश्च सोऽपि पापात् प्रमुच्यते ।
जातिस्मरत्वं विप्रत्वं कुले महति सम्भवम् ॥ ९९

सर्वज्ञतां च लभते नात्र कार्या विचारणा ।
स च संस्तूय च हरिं प्रविष्टः कमलोद्भवः ॥१००

अनुभाष्य सुरान् सर्वान् ययौ स्वं लोकमीश्वरः।
नारदस्तु ततस्तस्मान्मेरुपृष्ठे परिभ्रमन् ॥ १०१

स तु मामाजगामाशु दिदृक्षुर्द्वादशात्मकम् ।
स मया शास्त्रतः सम्यगभिवाद्याभिपूजितः॥

आख्यानमिदमाचष्ट ममानुग्रहकाम्यया ।
मयाप्येतत् सदस्येत्य पावनार्थं मनोहरम्॥१०३

भक्त्या तव महाबाहो कथामृतमुदाहृतम् ।
एतदर्थं महाबाहो रावणेन दुरात्मना ॥ १०४

विज्ञाय च हृता सीता त्वत्तो मरणकाङ्क्षया[१] ।
भवान्नारायणो देवः शङ्खचक्रगदाधरः ॥ १०५

शार्ङ्गपद्मायुधधरः सर्वदेवनमस्कृतः ।
श्रीवत्साङ्को हृषीकेशः सर्वदेवाभिपूजितः॥१०६

पद्मनाभो महायोगी भक्तानामभयप्रदः ।
वधार्थं रावणस्य त्वं प्रविष्टो मानुषीं तनुम् ॥

किं न वेत्सि त्वमात्मानं राम नारायणो ह्यहम् ।
मा मुह्यस्व महाभाग स्मर चात्मानमात्मना ॥

गुह्याद्गुह्यतरस्त्वं हि एवमाह पितामहः ।
त्रिगुणश्च त्रिवेदी च त्रिधामा त्रिपदात्मकः ॥

त्रिकालकर्मा त्रैविद्यस्त्रिदशारिप्रमर्दनः ।
त्वयाक्रान्तास्त्रयो लोकाः पुराणैर्विक्रमैस्त्रिभिः ॥

त्वं महेन्द्रानुजः श्रीमान् बलिबन्धनकारणात्
अदित्या गर्भसम्भूतो विष्णुस्त्वं हि सनातनः ॥

लोकाननुग्रहीतुं वै प्रविष्टो मानुषीं तनुम् ।
तदिदं साधितं कार्यं सुराणां सुरसत्तम ॥ ११२

---

१. ततः स(४३) इत्यादि मरणकाङ्क्षयेत्यन्तम् पुना. नास्ति ।

निहतो रावणः पापः सपुत्रगणबान्धवः ।
प्रहृष्टाश्च सुराः सर्वे ऋषयश्च तपोधनाः ॥

प्रशान्तं च जगत् सर्वं त्वत्प्रसादात् सुरेश्वर ।
सीता लक्ष्मीर्महाभागा सम्भूता वसुधातले ॥

त्वदर्थमियमुत्पन्ना जनकस्य गृहे शुभा ।
लङ्कामानीय यत्नेन मातेव परिरक्षिता ॥ ११५

एवमेतत् समाख्यातं तव राम महायशः ।
ममापि नारदेनोक्तमृषिणा दीर्घजीविना ॥ ११६

यथा सनत्कुमारेण व्याख्यातं तस्य रक्षसः ।
तेनापि च तदेवाशु कृतं सर्वमशेषतः ॥ ११७

यश्चैतच्छ्रावयेच्छ्राद्धे विद्वान् ब्राह्मणसन्निधौ ।
अनन्तमक्षय्यं दत्तं पितॄणामुपतिष्ठति ॥ ११८

एतां श्रुत्वा कथां दिव्यां रामो राजीवलोचनः ।
परं विस्मयमापन्नो भ्रातृभिः सह राघवः ॥ ११९

वानराः सहसुग्रीवा राक्षसाः सविभीषणाः ।
राजानश्च सहामात्या ये चान्येऽपि समागताः ॥

ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्रा धर्मसमन्विताः ।
सर्वे चोत्फुल्लनयनाः सर्वे हर्षसमन्विताः ॥ १२१

राममेवानुपश्यन्ति भृशमत्यन्तहर्षिताः ।
अगस्त्यस्त्वब्रवीद्रामं सर्वमेतच्छ्रुतं त्वया ॥ १२२

दृष्टः सम्भाषितश्चापि राम गच्छामहे वयम् ।
एवमुक्त्वा गताः सर्वे पूजितास्ते यथागतम् ॥

इति प्रक्षिप्तेषु श्वेतद्वीपवासप्राप्त्युपायकथनं नाम दशमः सर्गः

---

## अष्टात्रिंशः सर्गः

### जनकादिप्रतिप्रयाणम्

एवमास्ते महाबाहुरहन्यहनि राघवः । प्रशासत् सर्वकार्याणि पौरजानपदेषु च ॥ १
ततः कतिपयाहःसु वैदेहं मिथिलाधिपम् । राघवः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ २
भवान् हि गतिरव्यग्रा भवता पालिता वयम् । भवतस्तेजसोग्रेण रावणो निहतो मया ॥ ३
इक्ष्वाकूणां च सर्वेषां मैथिलानां च सर्वशः । अतुलाः प्रीतयो राजन् सम्बन्धकपुरोगमाः ॥ ४
तद्भवान् स्वपुरीं यातु रत्नान्यादाय पार्थिव । भरतश्च सहायार्थं पृष्ठतस्तेऽनुयास्यति ॥ ५
स तथेति नृपः कृत्वा राघवं वाक्यमब्रवीत् । प्रीतोऽस्मि भवतो राजन् दर्शनेन नयेन च ॥ ६
यान्येतानि तु रत्नानि मदर्थं सञ्चितानि वै । दुहित्रे तानि वै राजन् सर्वाण्येव ददामि च ॥ ७
एवमुक्त्वा तु काकुत्स्थं जनको हृष्टमानसः । प्रययौ मिथिलां श्रीमांस्तमनुज्ञाय राघवम्[1] ॥ ८
ततः प्रयाते जनके केकयं मातुलं प्रभुः । राघवः प्राञ्जलिर्भूत्वा वाक्यमेतदुवाच ह ॥ ९
इदं राज्यमहं चैव भरतश्च सलक्ष्मणः । आयत्तास्त्वं हि नो राजन् गतिश्च पुरुषर्षभ ॥ १०
राजापि वृद्धः सन्तापं त्वदर्थमुपयास्यति । तस्माद्गमनमद्यैव रोचते तव पार्थिव ॥ ११
लक्ष्मणेनानुयात्रेण पृष्ठतोऽनुगमिष्यते । धनमादाय विपुलं रत्नानि विविधानि च ॥ १२

---

१. इदं पद्यं ति. नोपलभ्यते ।

युधाजित्तु तथेत्याह गमनं प्रति राघवम् । रत्नानि च धनं चैव त्वय्येवाक्षय्यमस्त्विति ॥ १३
प्रदक्षिणं स राजानं कृत्वा केकयवर्धनः । रामेण हि कृतः पूर्वमभिवाद्य प्रदक्षिणम् ॥ १४
लक्ष्मणेन सहायेन प्रयातः केकयेश्वरः । हतेऽसुरे यथा वृत्रे विष्णुना सह वासवः ॥ १५
तं विसृज्य ततो रामो वयस्यमकुतोभयम् । प्रतर्दनं काशिपतिं परिष्वज्येदमब्रवीत् ॥ १६
दर्शिता भवता प्रीतिर्दर्शितं सौहृदं परम् । उद्योगश्च कृतो राजन् भरतेन त्वया सह ॥ १७
तद्भवानद्य काशेय पुरीं वाराणसीं व्रज । रमणीयां त्वया गुप्तां सुप्रकाशां सुतोरणाम् ॥ १८
एतावदुक्त्वा चोत्थाय काकुत्स्थः परमासनात् । पर्यष्वजत धर्मात्मा निरन्तरमुरोगतम् ॥ १९
विसर्जयामास तथा कौसल्यानन्दवर्धनः । राघवेणाभ्यनुज्ञातः काशीशोऽप्यकुतोभयः ॥ २०
वाराणसीं ययौ तूर्णं राघवेण विसर्जितः । विसृज्य तं काशिपतिं त्रिशतं पृथिवीपतीन् ॥ २१
प्रहसन् राघवो वाक्यमुवाच मधुराक्षरम् । भवतां प्रीतिरव्यग्रा तेजसा परिरक्षिता ॥ २२
धर्मश्च नियतो नित्यं सत्यं च भवतां सदा । युष्माकं चानुभावेन तेजसा च महात्मनाम् ॥ २३
हतो दुरात्मा दुर्बुद्धी रावणो राक्षसाधमः । हेतुमात्रमहं तत्र भवतां तेजसा हतः ॥ २४
रावणः सगणो युद्धे सपुत्रामात्यबान्धवः । भवन्तश्च समानीता भरतेन महात्मना ॥ २५
श्रुत्वा जनकराजस्य काननात्तनयां हृताम् । उद्युक्तानां च सर्वेषां पार्थिवानां महात्मनाम् ॥ २६
कालो व्यतीतः सुमहान् गमनं रोचयाम्यतः । प्रत्यूचुस्तं च राजानो हर्षेण महता वृताः ॥ २७
दिष्ट्या त्वं विजयी राम स्वराज्येऽपि प्रतिष्ठितः । दिष्ट्या प्रत्याहृता सीता दिष्ट्या शत्रुः पराजितः॥
एष नः परमः काम एषा नः प्रीतिरुत्तमा । यत्त्वां विजयिनं राम पश्यामो हतशात्रवम् ॥ २९
एतत्त्वय्युपपन्नं च यदस्मांस्त्वं प्रशंससे । प्रशंसार्हं न जानीमः प्रशंसां वक्तुमीदृशीम् ॥ ३०
आपृच्छामो गमिष्यामो हृदिस्थो नः सदा भवान् । वर्तामहे महाबाहो प्रीत्यात्र महता वृताः ॥ ३१
भवेच्च ते महाराज प्रीतिरस्मासु नित्यदा । बाढमित्येव राजानो हर्षेण परमन्विताः ॥ ३२
ऊचुः प्राञ्जलयः सर्वे राघवं गमनोत्सुकाः । पूजिताश्चैव रामेण जग्मुर्देशान् स्वकान् स्वकान् ॥ ३३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे जनकादिप्रतिप्रयाणं नाम अष्टात्रिंशः सर्गः

---

## एकोनचत्वरिंशः सर्गः

### वानरप्रीणनम्

ते प्रयाता महात्मानः पार्थिवास्ते प्रहृष्टवत् । गजवाजिसहस्रौघैः कम्पयन्तो वसुन्धराम् ॥ १
अक्षौहिण्यो हि तत्रासन् राघवार्थे समुद्यताः । भरतस्याज्ञयानेकाः प्रहृष्टा बलवाहनाः ॥ २
ऊचुस्ते च महीपाला बलदर्पसमन्विताः । न रामरावणं युद्धे पश्यामः पुरतः स्थितम् ॥ ३
भरतेन वयं पश्चात् समानीता निरर्थकम् । हता हि राक्षसाः क्षिप्रं पार्थिवैः स्युर्न संशयः ॥ ४
रामस्य बाहुवीर्येण रक्षिता लक्ष्मणस्य च । सुखं पारे समुद्रस्य युध्येम विगतज्वराः ॥ ५
एताश्चान्याश्च राजानः कथास्तत्र सहस्रशः । कथयन्तः स्वराज्यानि जग्मुर्हर्षसमन्विताः ॥ ६

स्वानि राज्यानि मुख्यानि ऋद्धानि मुदितानि च। समृद्धधनधान्यानि पूर्णानि वसुमन्ति च॥ ७
यथापुराणि ते गत्वा रत्नानि विविधान्यथ। रामस्य प्रियकामार्थमुपहारान् नृपा ददुः॥ ८
अश्वान् यानानि रत्नानि हस्तिनश्च मदोत्कटान्। चन्दनानि च मुख्यानि दिव्यान्याभरणानि च॥
मणिमुक्ताप्रवालांस्तु दास्यो रूपसमन्विताः। अजाविकं च विविधं रथांश्च विविधान् ददुः॥ १०
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलाः। आदाय तानि रत्नानि स्वां पुरीं पुनरागताः॥ ११
आगम्य च पुरीं रम्यामयोध्यां पुरुषर्षभाः। तानि रत्नानि चित्राणि रामाय समुपाहरन्॥ १२
प्रतिगृह्य च तत् सर्वं रामः प्रीतिसमन्वितः। सुग्रीवाय ददौ राज्ञे महात्मा कृतकर्मणे॥ १३
विभीषणाय च ददौ तथान्येभ्योऽपि राघवः। राक्षसेभ्यः कपिभ्यश्च यैर्वृतो जयमाप्तवान्॥ १४
ते सर्वे रामदत्तानि रत्नानि कपिराक्षसाः। शिरोभिर्धारयामासुर्बाहुभिश्च महाबलाः॥ १५
हनूमन्तं च नृपतिरिक्ष्वाकूणां महारथः। अङ्गदं च महाबाहुमङ्कमारोप्य वीर्यवान्॥ १६
रामः कमलपत्राक्षः सुग्रीवमिदमब्रवीत्। अङ्गदस्ते सुपुत्रोऽयं मन्त्री चाप्यनिलात्मजः॥ १७
सुग्रीव मन्त्रिते युक्तौ ममापि च हिते रतौ। अर्हतो विविधां पूजां त्वत्कृते वै हरीश्वर॥१८
इत्युक्त्वा व्यवमुच्याङ्गाद्भूषणानि महायशाः। स बबन्ध महार्हाणि तदाङ्गदहनूमतोः॥ १९
आभाष्य च महावीर्यान् राघवो यूथपर्षभान्। नीलं नलं केसरिणं कुमुदं गन्धमादनम्॥२०
सुषेणं पनसं वीरं मैन्दं द्विविदमेव च। जाम्बवन्तं गवाक्षं च विनतं धूम्रमेव च॥ २१
वलीमुखं प्रजङ्घं च संनादं च महाबलम्। दरीमुखं दधिमुखमिन्द्रजानुं च यूथपम्॥ २२
मधुरं श्लक्ष्णया वाचा नेत्राभ्यामापिबन्निव। सुहृदो मे भवन्तश्च शरीरं भ्रातरस्तथा॥ २३
युष्माभिरुद्धृतश्चाहं व्यसनात् काननौकसः। धन्यो राजा च सुग्रीवो भवद्भिः सुहृदां वरैः॥२४
एवमुक्त्वा ददौ तेभ्यो भूषणानि यथार्हतः। वज्राणि च महार्हाणि सस्वजे च नरर्षभः॥ २५
ते पिबन्तः सुगन्धीनि मधूनि मधुपिङ्गलाः। मांसानि च सुमृष्टानि मूलानि च फलानि च॥ २६
एवं तेषां निवसतां मासः साग्रो ययौ तदा। मुहूर्तमिव ते सर्वे राजभक्त्या च मेनिरे॥ २७
रामोऽपि रेमे तैः सार्धं वानरैः कामरूपिभिः। राक्षसैश्च महावीर्यैर्ऋक्षैश्चैव महाबलैः॥ २८
एवं तेषां ययौ मासो द्वितीयः शैशिरः सुखम्। वानराणां प्रहृष्टानां राक्षसानां च सर्वशः॥२९
इक्ष्वाकुनगरे रम्ये परां प्रीतिमुपासताम्। रामस्य प्रीतिकरणैः कालस्तेषां सुखं ययौ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे वानरप्रीणनं नाम एकोनचत्वारिंशः सर्गः

---

## चत्वारिंशः सर्गः

### हनूमत्प्रार्थना

तथा स्म तेषां वसतामृक्षवानररक्षसाम्। राघवस्तु महातेजाः सुग्रीवमिदमब्रवीत्॥ १
गम्यतां सौम्य किष्किन्धां दुराधर्षां सुरासुरैः। पालयस्व सहामात्यो[1] राज्यं निहतकण्टकम्॥ २

---

१. सहामात्यैः ति.

अङ्गदं च महाबाहो प्रीत्या परमया युतः । पश्य त्वं हनुमन्तं च नलं च सुमहाबलम् ॥ ३
सुषेणं श्वशुरं वीरं तारं च बलिनां वरम् । कुमुदं चैव दुर्धर्षं नीलं चैव महाबलम् ॥ ४
वीरं शतबलिं चैव मैन्दं द्विविदमेव च । गजं गवाक्षं गवयं शरभं च महाबलम् ॥ ५
पश्य प्रीतिसमायुक्तो गन्धमादनमेव च । ऋषभं च सुविक्रान्तं [1]जाम्बवन्तं महाबलम्[2] ॥ ६
ये चेमे सुमहात्मानो मदर्थे त्यक्तजीविताः । पश्य त्वं प्रीतिसंयुक्तो मा चैषां विप्रियं कृथाः ॥ ७
एवमुक्त्वा तु सुग्रीवमाश्लिष्य च पुनः पुनः । विभीषणमुवाचाथ रामो मधुरया गिरा ॥ ८
लङ्कां प्रशाधि धर्मेण धर्मज्ञस्त्वं मतो मम । पुरस्य राक्षसानां च भ्रातुर्वैश्रवणस्य च ॥ ९
मा च बुद्धिमधर्मे त्वं कुर्या राजन् कथंचन । बुद्धिमन्तो हि राजानो ध्रुवमश्नन्ति मेदिनीम् ॥ १०
अहं च नित्यशो राजन् सुग्रीवसहितस्त्वया । स्मर्तव्यः परया प्रीत्या गच्छ त्वं विगतज्वरः ॥ ११
रामस्य भाषितं श्रुत्वा ऋक्षवानरराक्षसाः । साधु साध्विति काकुत्स्थं प्रशशंसुः पुनः पुनः ॥ १२
तव बुद्धिर्महाबाहो वीर्यमद्भुतमेव च । माधुर्यं परमं राम स्वयंभोरिव नित्यदा ॥ १३
तेषामेवंब्रुवाणानां वानराणां च रक्षसाम् । हनूमान् प्रणतो[3] भूत्वा राघवं वाक्यमब्रवीत् ॥ १४
स्नेहो मे परमो राजंस्त्वयि तिष्ठति नित्यदा । भक्तिश्च नियता वीर भावो नान्यत्र गच्छतु ॥ १५
यावद्रामकथा वीर चरिष्यति महीतले । तावच्छरीरे वत्स्यन्ति प्राणा मम न संशयः ॥ १६
यच्चैतच्चरितं दिव्यं कथां ते रघुनन्दन । तन्ममाप्सरसो नाम श्रावयेयुर्नरर्षभ ॥ १७
तच्छ्रुत्वाहं ततो वीर तव चर्यामृतं प्रभो । उत्कण्ठां तां हरिष्यामि मेघलेखामिवानिलः ॥ १८
एवं ब्रुवाणं रामस्तु हनूमन्तं वरासनात् । उत्थाय सस्वजे स्नेहाद्वाक्यमेतदुवाच ह ॥ १९
एवमेतत् कपिश्रेष्ठ भविता नात्र संशय । चरिष्यति कथा यावदेषा लोके च मामिका ॥ २०
तावत्ते भविता कीर्तिः शरीरेऽप्यसवस्तथा । लोका हि यावत्स्थास्यन्ति तावत्स्थास्यति मे कथा ॥
एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे । शेषस्येहोपकाराणां भवाम ऋणिनो वयम् ॥ २२
मदङ्गे जीर्णतां यातु यत्त्वयोपकृतं कपे[4] । नरः प्रत्युपकाराणामापत्स्वायाति पात्रताम् ॥ २३
ततोऽस्य हारं चन्द्राभं मुच्य कण्ठात् स राघवः । वैदूर्यतरलं कण्ठे बबन्ध च हनूमतः ॥ २४
तेनोरसि निबद्धेन हारेण महता कपिः । रराज हेमशैलेन्द्रश्चन्द्रेणाक्रान्तमस्तकः ॥ २५
श्रुत्वा तु राघवस्यैतदुत्थायोत्थाय वानराः । प्रणम्य शिरसा पादौ निर्जग्मुस्ते महाबलाः ॥ २६
सुग्रीवः स च रामेण निरन्तरमुरोगतः । विभीषणश्च धर्मात्मा सर्वे ते बाष्पविक्लवाः ॥ २७
सर्वे च ते बाष्पकलाः साश्रुनेत्रा विचेतसः । सम्मूढा इव दुःखेन त्यजन्तो राघवं तदा ॥ २८
कृतप्रसादास्तेनैवं राघवेण महात्मना । जग्मुः स्वं स्वं गृहं सर्वे देही देहमिव त्यजन् ॥ २९

---

१. ऋक्षराजं च दुर्धर्षं ति.
२. अस्यानन्तरम्—केसरिं शरभं शुम्भं शङ्खचूडं महाबलम्—इति ति. अधिकम् ।
३. प्रवणो प्र.
४. शेषस्येत्यादि कपे इत्यन्तम् च. प्रक्षिप्तम् ।

ततस्तु ते राक्षसऋक्षवानराः प्रणम्य रामं रघुवंशवर्धनम् ।
वियोगजाश्रुप्रतिपूर्णलोचनाः प्रतिप्रयातास्तु यथा निवासिनः ॥ ३०

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे हनूमत्प्रार्थना नाम चत्वारिंशः सर्गः

———

## एकचत्वारिंशः सर्गः

### पुष्पकपुनरभ्यनुज्ञा

विसृज्य च महाबाहुर्ऋक्षवानरराक्षसान् । भ्रातृभिः सहितो रामः प्रमुमोद सुखं सुखी ॥ १
अथापराह्णसमये भ्रातृभिः सह राघवः । शुश्राव मधुरां वाणीमन्तरिक्षात् प्रभाषिताम् ॥ २
सौम्य राम निरीक्षस्व सौम्येन वदनेन माम् । कुबेरभवनात् प्राप्तं विद्धि मां पुष्पकं प्रभो ॥ ३
तव शासनमाज्ञाय गतोऽस्मि धनदं प्रति । उपस्थातुं नरश्रेष्ठ स च मां प्रत्यभाषत ॥ ४
निर्जितस्त्वं नरेन्द्रेण राघवेण महात्मना । निहत्य युधि दुर्धर्षं रावणं राक्षसेश्वरम् ॥ ५
ममापि परमा प्रीतिर्हते तस्मिन् दुरात्मनि । रावणे सगणे चैव सपुत्रे सहबान्धवे ॥ ६
स त्वं रामेण लङ्कायां निर्जितः परमात्मना । वह सौम्य तमेव त्वमहमाज्ञापयामि ते ॥ ७
परमो ह्येष मे कामो यत्त्वं राघवनन्दनम् । वहेर्लोकस्य संयानं गच्छस्व विगतज्वरः ॥ ८
सोऽहं शासनमाज्ञाय धनदस्य महात्मनः । त्वत्सकाशमनुप्राप्तो निर्विशङ्कः प्रतीच्छ[1] माम् ॥ ९
अधृष्यः[2] सर्वभूतानां सर्वेषां धनदाज्ञया । चराम्यहं प्रभावेण तवाज्ञां परिपालयन् ॥ १०
एवमुक्तस्तदा रामः पुष्पकेण महाबलः । उवाच पुष्पकं दृष्ट्वा विमानं पुनरागतम् ॥ ११
यद्येवं स्वागतं तेऽस्तु विमानवर पुष्पक । आनुकूल्याद्धनेशस्य वृत्तदोषो न नो भवेत् ॥ १२
लाजैश्चैव तथा पुष्पैर्धूपैश्चैव सुगन्धिभिः । पूजयित्वा महाबाहू राघवः पुष्पकं तदा ॥ १३
गम्यतामिति चोवाच आगच्छ त्वं स्मरे यदा । सिद्धानां च गतौ सौम्य मा विषादेन योजय ॥
प्रतिघातश्च ते मा भूद्यथेष्टं गच्छतो दिशः । एवमस्त्विति रामेण पूजयित्वा विसर्जितम् ॥ १५
अभिप्रेतां दिशं तस्मात् प्रायात्तत् पुष्पकं तदा । एवमन्तर्हिते तस्मिन् पुष्पके सुकृतात्मनि ॥ १६
भरतः प्राञ्जलिर्वाक्यमुवाच रघुनन्दनम् । विबुधात्मनि[3] दृश्यन्ते त्वयि वीर प्रशासति ॥ १७
अमानुषाणां सत्त्वानां व्याहृतानि मुहुर्मुहुः । अनामयश्च सत्त्वानां साग्रो मासो गतो ह्ययम् ॥ १८
जीर्णानामपि सत्त्वानां मृत्युर्नायाति राघव । अरोगप्रसवा नार्यो वपुष्मन्तो हि मानवाः ॥ १९
हर्षश्चाभ्यधिको राजञ्जनस्य पुरवासिनः । काले वर्षति पर्जन्यः पातयन्नमृतं पयः ॥ २०
वाताश्चापि प्रवान्त्येते स्पर्शयुक्ताः सुखाः शिवाः । ईदृशो नश्चिरं राजा भवेदिति नरेश्वर[4] ॥ २१

---

१. प्रतीक्ष च
२. अदृश्यः च.
३. विविधात्मनि च.
४. नरेश्वरः ति.

कथयन्ति पुरे राजन् पौरजानपदास्तथा । एता वाचः सुमधुरा भरतेन समीरिताः ॥ २२
श्रुत्वा रामो मुदा युक्तो बभूव नृपसत्तमः ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे पुष्पकपुनरभ्यनुज्ञा नाम एकचत्वारिंशः सर्गः

## द्विचत्वारिंशः सर्गः

### रामसीताविहारः

स विसृज्य ततो रामः पुष्पकं हेमभूषितम् । प्रविवेश महाबाहुरशोकवनिकां तदा ॥ १
चन्दनागरुचूतैश्च तुङ्गकालेयकैरपि । देवदारुवनैश्चापि समन्तादुपशोभिताम् ॥ २
चम्पकाशोकपुन्नागमधूकपनसासनैः । शोभितां पारिजातैश्च विधूमज्वलनप्रभैः ॥ ३
लोध्रनीपार्जुनैर्नागैः सप्तपर्णातिमुक्तकैः । मन्दारकदलीगुल्मलताजालसमावृताम् ॥ ४
प्रियङ्गुभिः कदम्बैश्च तथा च बकुलैरपि । जम्बूभिर्दाडिमैश्चैव कोविदारैश्च शोभिताम् ॥ ५
सर्वदा कुसुमै रम्यैः फलवद्भिर्मनोरमैः । दिव्यगन्धरसोपेतैस्तरुणाङ्कुरपल्लवैः ॥ ६
तथैव तरुभिर्दिव्यैः शिल्पिभिः परिकल्पितैः । चारुपल्लवपुष्पाढ्यैर्मत्तभ्रमरसङ्कुलैः ॥ ७
कोकिलैर्भृङ्गराजैश्च नानावर्णैश्च पक्षिभिः । शोभितां शतशश्चित्रां चूतवृक्षावतंसकैः ॥ ८
शातकुम्भनिभाः केचित् केचिदग्निशिखोपमाः । नीलाञ्जननिभाश्चान्ये भान्ति [1]तत्रत्यपादपाः ॥ ९
सुरभीणि च पुष्पाणि माल्यानि विविधानि च । दीर्घिका विविधाकाराः पूर्णाः परमवारिणा ॥ १०
माणिक्यकृतसोपानाः स्फटिकान्तरकुट्टिमाः । फुल्लपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ॥ ११
दात्यूहशुकसङ्घुष्टा हंससारसनादिताः । तरुभिः पुष्पवद्भिश्च तीरजैरुपशोभिताः ॥ १२
प्राकारैर्विविधाकारैः शोभिताश्च शिलातलैः । तत्रैव च वनोद्देशे वैदूर्यमणिसंनिभैः ॥ १३
शाद्वलैः परमोपेतां पुष्पितद्रुमकाननाम् । तत्र सङ्घर्षजातानां वृक्षाणां पुष्पशालिनाम् ॥ १४
प्रस्तराः पुष्पशबला नभस्तारागणैरिव । नन्दनं हि यथेन्द्रस्य ब्राह्मं चैत्ररथं यथा ॥ १५
तथाभूतं हि रामस्य काननं संनिवेशनम् । बह्वासनगृहोपेतां [2]लतागृहसमावृताम् ॥ १६
अशोकवानिकां स्फीतां प्रविश्य रघुनन्दनः । आसने च शुभाकारे पुष्पप्रकरभूषिते ॥ १७
कुथास्तरणसंवीते रामः संनिषसाद ह । सीतामादाय हस्तेन मधु मैरेयकं शुचि ॥ १८
पाययामास काकुत्स्थः शचीमिव पुरन्दरः । मांसानि च सुमृष्टानि फलानि विविधानि च ॥ १९
रामस्याभ्यवहारार्थं किंकरास्तूर्णमाहरन् । उपानृत्यंश्च राजानं नृत्तगीतविशारदाः ॥ २०
बालाश्च रूपवत्यश्च स्त्रियः पानवशानुगाः । उपानृत्यन्त काकुत्स्थं नृत्यगीतविशारदाः[3] ॥ २१

---

१. तत्र स्म ति.
२. लताशन. ति.
३. इदमर्धम्, इतः पूर्वम् अप्सरोगणसङ्घाश्च किंनरोपरिवारिताः । दक्षिणा रूपवत्यश्च स्त्रियः पानवशं गताः ॥—इति इत्येकं पद्यं च च. प्रक्षिप्तम्; ति. वर्तते ।

मनोऽभिरामा रामास्ता रामो रमयतां वरः । रमयामास धर्मात्मा नित्यं परमभूषितः ॥ २२
स तया सीतया सार्धमासीनो विरराज ह । अरुन्धत्या सहासीनो वसिष्ठ इव तेजसा ॥ २३
एवं रामो मुदा युक्तः सीतां सुरसुतोपमाम् । रमयामास वैदेहीमहन्यहनि देववत् ॥ २४
तथा तयोर्विहरतोः सीताराघवयोश्चिरम् । अत्यक्रामच्छुभः कान्तः शिशिरो भोगदः सदा[1] ॥ २५
प्राप्तयोर्विविधान् भोगानतीतः शिशिरागमः । पूर्वाह्णे धर्मकार्याणि कृत्वा धर्मेण धर्मवित् ॥ २६
शेषं दिवसभागार्धमन्तःपुरगतोऽभवत् । सीतापि देवकार्याणि कृत्वा पौर्वाह्णिकानि वै ॥ २७
श्वश्रूणामकरोत् पूजां सर्वासामविशेषतः । अभ्यगच्छत्ततो रामं विचित्राभरणाम्बरा ॥ २८
त्रिविष्टपे सहस्राक्षमुपविष्टं यथा शची । दृष्ट्वा तु राघवः पत्नीं कल्याणेन समन्विताम् ॥ २९
प्रहर्षमतुलं लेभे साधु साध्विति चाब्रवीत् । अब्रवीच्च वरारोहां सीतां सुरसुतोपमाम् ॥ ३०
अपत्यलाभो वैदेहि त्वयि मे समुपस्थितः । किमिच्छसि वरारोहे कामः किं क्रियतां तव ॥ ३१
स्मितं कृत्वा तु वैदेही रामं वाक्यमथाब्रवीत् । तपोवनानि पुण्यानि द्रष्टुमिच्छामि राघव ॥ ३२
गङ्गातीरोपविष्टानामृषीणामुग्रतेजसाम् । फलमूलाशिनां देव पादमूलेषु वर्तितुम् ॥ ३३
एष मे परमः कामो यन्मूलफलभोजिनाम् । अप्येकरात्रं[2] काकुत्स्थ निवसेयं तपोवने ॥ ३४
तथेति च प्रतिज्ञातं रामेणाक्लिष्टकर्मणा । विस्रब्धा भव वैदेहि श्वो गमिष्यस्यसंशयम् ॥ ३५
एवमुक्त्वा तु काकुत्स्थो मैथिलीं जनकात्मजाम् । मध्यकक्ष्यान्तरं रामो निर्जगाम सुहृद्वृतः ॥ ३६

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे रामसीताविहारो नाम द्विचत्वारिंशः सर्गः

---

## त्रिचत्वारिंशः सर्गः

### भद्रवाक्यश्रवणम्

तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः । कथानां बहुरूपाणां हास्यकाराः समन्ततः ॥ १
विजयो मधुमत्तश्च काश्यपः पिङ्गलः कुटः । सुराजः कालियो भद्रो दन्तवक्त्रः सुमागधः ॥ २
एते कथा बहुविधाः परिहाससमन्विताः । कथयन्ति स्म संहृष्टा राघवस्य महात्मनः ॥ ३
ततः कथायां कस्यांचिद्राघवः समभाषत । काः कथा नगरे भद्र वर्तन्ते विषयेषु च ॥ ४
मामाश्रितानि कान्याहुः पौरजानपदा जनाः । किं च सीतां समाश्रित्य भरतं किं च लक्ष्मणम् ॥
किं नु शत्रुघ्नमुद्दिश्य कैकेयीं किं नु मातरम् । वक्तव्यतां च राजानो नवे[3] राज्ये व्रजन्ति च ॥ ६
एवमुक्ते तु रामेण भद्रः प्राञ्जलिरब्रवीत् । स्थिताः कथाः शुभा राजन् वर्तन्ते पुरवासिनाम् ॥ ७
अमुं तु विजयं सौम्य दशग्रीववधार्जितम् । भूयिष्ठं स्वपुरे पौरैः कथ्यन्ते पुरुषर्षभ[4] ॥ ८
एवमुक्तस्तु भद्रेण राघवो वाक्यमब्रवीत् । कथयस्व यथातत्त्वं सर्वं निरवशेषतः ॥ ९

---

१. अस्यानन्तरम्—दशवर्षसहस्राणि गतानि सुमहात्मनोः—इति च.
२. -रात्रिं ति.
३. वरे च.; वने ति.
४. पुरुषर्षभः च.

शुभाशुभानि वाक्यानि यान्याहुः पुरवासिनः । श्रुत्वेदानीं शुभं कुर्यां न कुर्यामशुभानि च ॥ १०
कथयस्व च विस्रब्धो निर्भयं विगतज्वरः । कथयन्ति यथा पौराः पापा जनपदेषु च ॥ ११
राघवेणैवमुक्तस्तु भद्रः सुरुचिरं वचः । प्रत्युवाच महाबाहुं प्राञ्जलिः सुसमाहितः ॥ १२
शृणु राजन् यथा पौराः कथयन्ति शुभाशुभम् । चत्वरापणरथ्यासु वनेषूपवनेषु च ॥ १३
दुष्करं कृतवान् रामः समुद्रे सेतुबन्धनम । अश्रुतं पूर्वकैः कैश्चिद्देवैरपि सदानवैः ॥ १४
रावणश्च दुराधर्षो हतः सबलवाहनः । वानराश्च वशं नीता ऋक्षाश्च सह राक्षसैः ॥ १५
हत्वा च रावणं सङ्ख्ये सीतामाहृत्य राघवः । [1]अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ॥ १६
कीदृशं हृदये तस्य सीतासम्भोगजं सुखम् । अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम् ॥ १७
लङ्कामपि पुरा नीतामशोकवनिकां गताम् । रक्षसां वशमापन्नां कथं रामो न कुत्सते ॥ १८
अस्माकमपि दारेषु सहनीयं भविष्यति । यथा हि कुरुते राजा प्रजा तमनुवर्तते ॥ १९
एवं बहुविधा वाचो वदन्ति पुरवासिनः । नगरेषु च सर्वेषु राजञ्जनपदेषु च ॥ २०
तस्यैवं भाषितं श्रुत्वा राघवः परमार्तवत्[2] । उवाच सुहृदः सर्वान् कथमेतद्ब्रवीथ माम् ॥ २१
सर्वे तु शिरसा भूमावभिवाद्य प्रणम्य च । प्रत्यूचू राघवं दीनमेवमेतन्न संशयः ॥ २२
श्रुत्वा तु वाक्यं काकुत्स्थः सर्वेषां समुदीरितम् । विसर्जयामास तदा वयस्याञ्शत्रुसूदनः ॥ २३

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायां
उत्तरकाण्डे भद्रवाक्यश्रवणं नाम त्रिचत्वारिंशः सर्गः

---

## चतुश्चत्वारिंशः सर्गः

### लक्ष्मणाद्यानयनम्

विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः । समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत् ॥ १
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् । भरतं च महाभागं शत्रुघ्नमपराजितम् ॥ २
रामस्य वचनं श्रुत्वा द्वाःस्थो मूर्ध्नि कृताञ्जलिः । लक्ष्मणस्य गृहं गत्वा प्रविवेशानिवारितः ॥ ३
उवाच सुमहात्मानं वर्धयित्वा कृताञ्जलिः । द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र मा चिरम् ॥ ४
बाढमित्येव सौमित्रिः श्रुत्वा राघवशासनम् । प्राद्रवद्रथमारुह्य राघवस्य निवेशनम् ॥ ५
प्रयान्तं लक्ष्मणं दृष्ट्वा द्वाःस्थो भरतमन्तिकात् । उवाच भरतं तत्र वर्धयित्वा कृताञ्जलिः ॥६
विनयावनतो भूत्वा राजा त्वां द्रष्टुमिच्छति । भरतस्तु वचः श्रुत्वा द्वाःस्थाद्रामसमीरितम् ॥ ७
उत्पपातासनात्तूर्णं पद्भ्यामेव ययौ बली । दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ॥ ८
शत्रुघ्नभवनं गत्वा ततो वाक्यमुवाच ह । एह्यागच्छ रघुश्रेष्ठ राजा त्वां द्रष्टुमिच्छति ॥ ९

---

1. क्रोधम् इति तिलकः; अभिमानम् इति युज्यते अर्थः ।

2. आर्तवत् दुःखीवाकारं कृत्वा, वस्तुतो भगवति हर्षदुःखयोरभावात् इति तिलकः ।

गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः । श्रुत्वा तु वचनं तस्य शत्रुघ्नः परमासनात् ॥ १०
शिरसावन्द्य धरणीं प्रययौ यत्र राघवः । द्वाःस्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः ॥ ११
निवेदयामास तदा भ्रातॄन् स्वान् समुपस्थितान् । कुमारानागताञ्श्रुत्वा चिन्ताव्याकुलितेन्द्रियः॥१२
अवाङ्मुखो दीनमना द्वाःस्थं वचनमब्रवीत् । प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ॥ १३
एतेषु जीवितं मह्यमेते प्राणाः प्रिया मम । आज्ञप्तास्तु नरेन्द्रेण कुमाराः शुक्रतेजसः ॥ १४
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः । ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा ॥ १५
सन्ध्यागतमिवादित्यं प्रभया परिवर्जितम् । बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः ॥ १६
हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते । ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः ॥ १७
तस्थुः समाहिताः सर्वे रामस्त्वश्रूण्यवर्तयत् । तान् परिष्वज्य बाहुभ्यामुत्थाप्य च महाबलः ॥ १८
आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह । भवन्तो मम सर्वस्वं भवन्तो जीवितं मम ॥ १९
भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः । भवन्तः कृतशास्त्रार्था बुद्ध्या च परिनिष्ठिताः ॥ २०
सम्भूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः । तथा वदति काकुत्स्थे ह्यवधानपरायणाः ॥ २१
उद्विग्नमनसः सर्वे किं नु राजाभिधास्यति ॥

इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये चतुर्विंशतिसहस्रिकायां संहितायाम्
उत्तरकाण्डे लक्ष्मणाद्यानयनं नाम चतुश्चत्वारिंशः सर्गः

---

## पञ्चचत्वारिंशः सर्गः

### सीतासमुत्सर्गादेशः

तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् । उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता ॥ १
सर्वे शृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा । पौराणां मम सीतायां यादृशी वर्तते कथा ॥ २
पौरापवादः सुमहांस्तथा जनपदस्य च । वर्तते मयि बीभत्सा सा मे मर्माणि कृन्तति ॥ ३
अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् । सीतापि सत्कुले जाता जनकानां महात्मनाम् ॥ ४
जानासि त्वं यथा सौम्य दण्डके विजने वने । रावणेन हृता सीता स च विध्वंसितो मया ॥ ५
तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति । अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ॥ ६
प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा । प्रत्यक्षं तत्र सौमित्रे देवानां हव्यवाहनः ॥ ७
अपापां मैथिलीमाह वायुश्चाकाशगोचरः । चन्द्रादित्यौ च शंसेते सुराणां सन्निधौ पुरा ॥ ८
ऋषीणां चैव सर्वेषामपापां जनकात्मजाम् । एवं शुद्धसमाचारा देवगन्धर्वसन्निधौ ॥ ९
लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेशिता[1] । अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् ॥ १०
ततो गृहीत्वा वैदेहीमयोध्यामहमागतः । अयं तु मे महान् वादः शोकश्च हृदि वर्तते ॥ ११
पौरापवादः सुमहांस्तथा जनपदस्य च । अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ॥ १२

---

१. निवेदिना ति.

